८६४

परीक्षापाठ्यम्—

# पिङ्गलच्छन्दः-सूत्रम्

[ श्रीमत्पिङ्गलाचार्य्यविरचितच्छन्दःशास्त्रम् ]

[ महामहोपाध्याय-श्रीहलायुधभट्टकृतमृतसञ्जीवनीटीकया नानाविध-टिप्पण्या वङ्गानुवादेन हिन्दीभाषानुवादेन च समलङ्कृतम् ]

---

सिद्धान्तरत्नवेदतीर्थोपनामकेन

स्वर्गीय-सीतानाथसामाध्यायिभट्टाचार्य्येण

सम्पादितम्

श्रीगोविन्दचन्द्र-काव्यतीर्थ-पुराणशास्त्रिणा

संशोधितम्।




1935.



मूल्यं सार्द्धरूप्यकम्—१॥

# अकारादिवर्णक्रमेण छन्दःसूत्राणां सूची।



# उत्सर्गपत्रम

विविधग्रन्थनिबन्धनपटुतर-सिद्धान्तपारीण-
परमपूजनीयाशेषशास्त्राध्यापक-
स्वर्गीय-गुरुनाथकाव्यतीर्थ-विद्यानिधि-
भट्टाचार्य्यवर्य्याय—

शिष्येभ्योऽनर्घ्यविद्यानिधिचयमददात् सर्व्वविद्यानिधिर्यो
मान्येभ्यो मानरत्नं सुमधुरवचनो भक्तिरत्नं गुरुभ्यः।
दीनेभ्यो दानरत्नं सविनय इह यः प्रेमरत्नं प्रियेभ्यो
विद्यार्थिभ्योऽप्यनेकं निजकृतममलं ग्रन्थरत्नं पृथिव्याम् ॥
यः शास्त्राब्जविकाशने दिनकरः स्नेहे कुमुद्वान्धवो
ज्ञाने देवगुरुर्बुधः परिषदि प्रज्ञाप्रदाने कविः।
केतुर्वादिनि वञ्चके शनिररौ राहुः प्रिये मङ्गल
इत्थं योऽत्र नवग्रहस्य तुलनां कृत्वाऽवसद् भूतले ॥
कल्पद्रुमामृतफलं कविमुखालभ्य-
मास्वाद्य यः सदसि राजति निर्ज्जराणाम्।
किं देयमस्ति सलिलाञ्जलिना विनाऽस्मै
भक्त्यम्बुपिङ्गलतिलैः स मया प्रदत्तः ॥

श्रीचरणाश्रित—

श्रीसीतानाथशर्म्मणा।

## पातनिका

अपौरुषेयवेद एव न्याय-स्मृति-सांख्य-वेदान्त-मीमांसादिस-शास्त्रप्रणेतृवृन्दानां व्यास-गोतम कणाद-कपिलादीनाम् उपजीव्य-विषयत्वेन प्रतिभाति। वेदार्थज्ञानमन्तरेण का कथा धर्म्मादिशास्त्राणां, ब्राह्मणानां नित्यकर्त्तव्यसन्ध्यादिष्वपि न सम्यग्बोधो जायते। छन्दोज्ञानमन्तरेण न कदाचित् वेदार्थज्ञानं सम्भवति इत्यत्र विभिन्न-धर्म्ममार्गावलम्बिनां परस्परं विवदमानानामपि मुनीनामैकमत्यम्, यतः विविधच्छन्दोनिबद्धपद्यकदम्बकैरलङ्कृतास्तावद् वेदाः। छन्दः-शास्त्रानभिज्ञस्य वेदाध्ययने दोषश्रुतिरपि राजते। तथाच श्रुतिः—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यति प्र वा मीयते पापी-यान् भवति" (आ ब्रा २१) अपिच दृश्यते पाणिनीयशिक्षायाम्—"आर्षं छन्दश्च दैवत्यं विनियोगः पुनः पुनः। वेदितव्यं प्रयत्नेन ब्राह्म-णेन विशेषतः॥" "मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽप-राधात्॥" चतुर्दशसु विद्यासु छन्दःशास्त्रं चैका विशिष्टा विद्या। उक्तञ्च विष्णुपुराणे—'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥" वेदस्य षडङ्गानि यथा—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्द इत्यपि। ज्योतिषा-मयनञ्चैव षडङ्गो वेद इष्यते॥" यथा पद्भ्यां विना मनुजस्य, तथा छन्दोऽन्तरेण वेदस्य अवस्था दुरवस्थैव जायते। तथाच पाणिनीय-शिक्षायाम्—"छन्दः पादौ तु वेदस्य" इति। इदमेव वाङ्मयं छन्दःशास्त्रं छन्दोग्रन्थप्रणेतृभिर्मुनिभिः साङ्केतिकैर्दैवात्मकवर्णसमूहै-र्विनिर्म्मितम्। उदीरितञ्च श्रीमता गङ्गादासेन—"म्यरस्तजभ्नगैर्लान्ते-

रेभिर्दशभिरचरः। समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥"
एतेषु वर्णेषु मकाराद्यष्टगणानां देवैः सह साम्यमपि दृश्यते। तथाच—

मो भूमिः श्रियमातनोति य जलं वृद्धिं र चाग्निर्मृतिं
सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम्।
जः सूर्य्यो रुजमाददाति विपुलं भेन्दुर्यशो निर्म्मलं
नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः॥

तत्र गणसंख्या-नाम-रूप-देवताफलज्ञापकं यन्त्रम् यथा—

| गणनाम। | रूपम्। | देवता। | फलम्। | मित्रादि | फलम् |
|---|---|---|---|---|---|
| १—मगणः | ऽ ऽ ऽ | मही | लक्ष्मीः | मित्रम् | शुभम् |
| २—नगणः | । । । | स्वर्गः | वृद्धिः | मित्रम् | शुभम् |
| ३—भगणः | ऽ । । | शशी | यशः | दासः | शुभम् |
| ४—यगणः | । ऽ ऽ | जलम् | आयुः | दासः | शुभम् |
| ५—जगणः | । ऽ । | रविः | रुक् | उदासः | अशुभम् |
| ६—रगणः | ऽ । ऽ | अग्निः | दाहः | शत्रुः | अशुभम् |
| ७—सगणः | । । ऽ | वायुः | विदेशः | शत्रुः | अशुभम् |
| ८—तगणः | ऽ ऽ । | नभः | शून्यम् | उदासः | अशुभम् |

अस्य छन्दःशास्त्रस्य पिङ्गलाचार्य्यस्तावत् प्रथमः प्रणेता। स हि पिङ्गलाचार्य्यः कुत्रचित् पिङ्गलनाम्ना, कुत्रचित् पिङ्गलमुनिरिति नाम्नापि प्रसिद्धः। अपिच पतञ्जलेर्नामान्तरं पिङ्गलाचार्य्य इत्यपि जनश्रुतिर्विद्वज्जनमानसपथे कदाचित् पथिकायते। दृश्यते खलु तत्कृतप्राकृतच्छन्दोग्रन्थस्य मङ्गलाचरणश्लोके पिङ्गलनाग इति नाम, तथाच—"जो विविहमत्तं साअरपारं पत्तो विविमलमइहेलम्। पढमभासतरण्डो णाओ सो पिङ्गलो जअइ।" अत्र अस्य वार्त्तिक-टीकाकारचन्द्रशेखरः—

"यो विविधवर्णमात्राप्रस्तारात् सागरं प्राप्य।

गरुडमवञ्चयदतुलः स हि नागः पिङ्गलो जयति ॥"

अत्र पठमशब्दोपादानात् छन्दःशास्त्रस्य प्रथमप्रणेता पिङ्गलनाग एवेति लभ्यते। तत्र सुधीपरम्परागतां कामपि आख्यायिकामनुस्मरन्ति केचित्। यथा—एकदा फणिपतिः पिङ्गलनागः पृथिवीलोकदर्शनलालसः सन् पातालभवनात् पृथिवीं समुपागमत्। अथ भूलोकस्य पर्वतारामकन्दरकाननगरादिकं परिभ्रम्य लब्धशान्तिः पुनः पातालतलं गच्छन्, वैनतेयं नागान्तकमन्तकमिव अग्रतः समवलोक्य परित्यज्य च जीवनाशां भयेन कम्पितकलेवरः "हा हतोऽस्मि" इति मनसि विचिन्त्य व्याकुलो बभूव। अथ नागं दृष्ट्वा तं भक्षयितुं मुखव्यादानं कृत्वा समागतं गरुडं विनीतभावेन पिङ्गलनागः कथयामास—"भो पक्षिराज! मयि तदुदरस्थे मया सह वेदस्य विशिष्टाङ्गं छन्दःशास्त्रं चिराय विलुप्तं भविष्यति। अतः प्रथमतो मद्भाषितं छन्दःशास्त्रं श्रुत्वा पश्चात् मां व्यापादय, इयमेव मे प्रार्थनेति।" कुतूहलाक्रान्तो गरुडोऽपि तत् श्रोतुमभिलषति स्म। अथ पिङ्गलनागो विशेषभावेन छन्दःशास्त्रवर्णनप्रसङ्गेन चतुःसंख्यकयकारस्य प्रस्तारबोधकाङ्कसङ्केतं भूमौ संस्थाप्य क्रमशः सागरतीरं समुपस्थितः। गरुडोऽपि छन्दःशास्त्रं श्रुत्वा प्रस्तारबोधकाङ्कसङ्केतञ्च दृष्ट्वा विमुग्धः सञ्जातः। पिङ्गलनागश्च समुद्रं प्राप्य चतुर्भिर्यकारैर्भुजङ्गप्रयातमिति विहस्योक्त्वा सामुद्रिकेण पथा अनायासेनैव पातालं प्रविवेश। अनेन पिङ्गलनागेन वैदिकलौकिकच्छन्दसां यानि सूत्राणि विरचितानि तेषामर्थज्ञानाय बहुभिर्विपश्चिद्भिर्बहुविधव्याख्यानं निरमायि। तेषां महामहोपाध्याय—श्रीहलायुधभट्टप्रणीता मृतसञ्जीवनीनाम्नी वृत्तिरेव प्रसिद्धा, सर्वत्र समाद्रियते च। धनञ्जयभट्टात्मजोऽयं हलायुधभट्टः श्रीभट्टनारायणवंशसम्भूतः। अयमेव भट्टनारायणः वङ्गाधिपादिशूरेणानीतेषु ब्राह्मणेषु अन्यतमः। अस्मात्

भट्टनारायणात् द्वादशपुरुषोऽयं हलायुधः। एष हलायुधः वङ्गाधिपते-र्लक्ष्मणसेनस्य सभापण्डित आसीत्। वङ्गाधिपतिर्यौवने सभा-पण्डितपदं प्रौढे मन्त्रिपदं वार्द्धके धर्म्माधिकरणिकपदं तस्मै दत्तवान्। सोऽयं लक्ष्मणसेनः खृष्टीयद्वादशशताब्दीप्रारम्भे विललास इति प्रत्न-तत्त्वविदः अनुमिमते। अतो हलायुधोऽपि खृष्टीयद्वादशशताब्दी-प्रारम्भकालिकः पण्डितराजः। अयं खलु गोष्पतिप्रतिमः पण्डितसर्व्वस्वं, ब्राह्मणसर्व्वस्वं, शिवसर्वस्वं, मत्स्यसूक्ततन्त्रं, कविरहस्यमित्यादि-बहुग्रन्थान् प्रणिनाय। अस्मिन् छन्दःशास्त्रे अष्टौ अध्यायाः सन्ति। तत्र प्रथमाध्याये पारिभाषिकसंज्ञा। द्वितीयाध्याये गायत्र्यादि-च्छन्दसां अक्षरसंख्या। तृतीयाध्याये गायत्र्यादिनानाविधवैदिक-च्छन्दसां लक्षणानि पदव्यवस्थादिश्च। चतुर्थाध्याये आर्य्यावैतालीय-च्छन्दसामुक्तिः। पञ्चमाध्याये विषमार्द्धसमवृत्तकथनम्। षष्ठाध्याये यतिनियमः, षडक्षरपादमारभ्य द्वादशाक्षरपादपर्य्यन्तानां छन्दसां गणविन्यासवैलक्षण्येन क्रमशो विभिन्नलक्षणकथनञ्च। सप्तमाध्याये त्रयोदशाक्षरपादमारभ्य षड्विंशत्यक्षरपादपर्य्यन्तानां छन्दसां क्रमशो विभिन्नलक्षणानुकीर्त्तनम्। अष्टमाध्याये गाथाप्रस्तारादिनिरूपणम्।

इदमेव पिङ्गलच्छन्दःसूत्रं नानाविधासु परीक्षासु पाठ्यरूपेण निर्वाचितम्। अत एवास्य प्रकाशविषये ममोयं प्रयासः। ग्रन्थस्यास्य वैदोक्तोदाहरणादीनां संगतये सामवेदसंहिता-ऋग्वेद संहिता-यजुर्वेद-संहिता मन्त्रब्राह्मणैतरेयब्राह्मणप्रभृतिग्रन्था-स्तथा विद्यार्थिवृन्दानां सुखबोधनाय प्रस्तारादिविवृतिविषये प्राकृत-पिङ्गलप्रस्तारादिरत्नाकर—वृत्तरत्नाकर—वाणीभूषणप्रभृतिच्छन्दःशास्त्र निचयाश्च समालोचिताः। अपि चास्य पाठसंगतये एसियाटिक-सोसाइटि-प्रकाशितं पुस्तकं, वाराणसेय-वेचारामसार्व्वभौमप्रकाशितं पुस्तकं मुम्बयीमुद्रितं पुस्तकं हस्तलिखितपुस्तकमेकञ्च संगृह्य

पुस्तकमिदं विशुद्धीकर्त्तुं प्रयते स्म। प्राप्तो मया महानुपकारः काशीस्थ-राजकीय-संस्कृतविद्या-मन्दिराध्यापक-पण्डितवर्य्य-वेचाराम-सार्व्वभौमकृतटिप्पनीतः; अतस्तत्र कृतज्ञतापाशबद्धोऽहम्। अनेन पिङ्गलच्छन्दःसूत्रेण यदि विद्यार्थिवृन्दानामुपकारलेशोऽपि जायते तदैव मे परिश्रमः सफलीभविष्यतीति मन्ये। परन्तु मादृशाल्पज्ञान-जनसुलभेन मतिदोषेण जनितानि स्खलितानि सुविमृश्य प्रबोधयन्तु विबुधवरा येन कृतज्ञतापुरःसरं यतेय पुनरावृत्तौ निर्दोषतायै, सन्तारश्च हंस-क्षीरन्यायावलम्बिनः पाठका दूषणवाचंयमा सूरयः सीसकाक्षर-योजकदोषेण मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन् विरमामि निरर्थकाद्विस्तरादिति कलयति--

१८३५ शकाब्दीय— राशपूर्णिमायाम्। } आश्रव— सम्पादकः।

द्वितीयसंस्करण-विज्ञप्तिः—मुद्रितेष्वपि बहुषु पिङ्गलच्छन्दः-सूत्रेषु, मत्प्रकाशितपुस्तक एव अनुग्राहकाणां ग्राहकाणामाग्रहातिशयं दृष्ट्वा नितरां सफलकामः संवृत्तोऽस्मि। अस्मिन् खलु संस्करणे टिप्पन्यंशा बहुशः परिवर्द्धिताः, अवलम्बितश्च संशोधनविषये महान् यत्न इति दिक्।

१८३६ शकाब्दीय—दूर्व्वाष्टम्याम्। } आश्रव— प्रकाशकस्य।

## तृतीयसंस्करणविज्ञप्तिः—

अस्य निरवद्यमहिम्नो महेश्वरस्य नित्यमकृपणकृपाकटाक्षपक्षपातेन निरवग्रहमनुग्रहपरिग्राहिणाञ्च ग्राहकाणामाग्रहातिशयपरिलम्भेन द्वितीतसंस्करणमप्यस्य पिङ्गलच्छन्दःसूत्रस्य निरस्य सर्व्वदक्षमपि प्रति-पक्षपक्षं सुधीगोष्ठ्यामात्मप्रतिष्ठां प्रतिष्ठाप्य निःशेषतामुपागच्छदिति भूयो भूयो नितरामनुरागवद्भिः सहृदयग्राहकैरनुरुद्धो भूयोऽपि तृतीयसंस्करणमस्य सम्पाद्य तेभ्य उपहारं कल्पयामः। संस्करणे चास्मिन् सुतरां शिक्षार्थिनां केषाञ्चिदुपकाराय सन्निवेशितो नामास्माभिरस्य समग्रस्य हिन्दीभाषानुवादः, विषये चास्मिन् सुमहदुपकृतं मे पञ्चनद-वास्तव्येन श्रीशशिभूषणशास्त्रिणा, अतः कृतज्ञोऽहमस्य सुदिव्य-प्रतिभाविकाशस्य। संशोधनविषये च भूयानारचितो यत्नव्यतिकरः, येन यथाशक्ति विशुद्धतामानीतमिवेदं सुधीगोष्ठ्याम् आत्मप्रतिष्ठा-मधिकतरामुपार्ज्जयितुं शक्नुयात्।

*　　*　　*　　*　　*

१८३७ शकाब्दीय—
दोलपूर्णिमायाम्।　}　आश्रव—
प्रकाशकस्य।

१८४० शकाब्दीय—वैशाखपूर्णिमायां चतुर्थं संस्करणं संवृत्तम्। मूल्यं मुद्रणोपकरणानां दुर्म्मूल्यतया चतुराणकं वर्द्धितम्।

*　　*　　*　　*　　*

## षष्टमसंस्करणम्

अस्मिन् वारे किमपि वक्तव्यं नास्तीति वक्तव्यं प्रकाशकानामिति।

१३४२ वङ्गाब्दीय—
रासपूर्णिमायाम्।　}

# पिङ्गलच्छन्दःसूत्रम्



## हलायुधवृत्तिसहितम्



## प्रथमोऽध्यायः

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ (क)
श्रीमत्पिङ्गलनागोक्तच्छन्दःशास्त्रमहोदधौ ।
वृत्तानि मौक्तिकानीव कानिचिद्विचिनोम्यहम् ॥ १ ॥
वेदानां प्रथमाङ्गस्य कवीनां नयनस्य च ।
पिङ्गलाचार्य्यसूत्रस्य मया वृत्तिर्विधास्यते ॥ २ ॥
क्षीराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।
छन्दोऽब्धेः पिङ्गलाचार्य्यैश्छन्दोऽमृतं तथोद्धृतम् ॥ ३ ॥
मयरसतजभनलगसम्मितं भ्रमति वाङ्मयं जगति यस्य ।
स जयति पिङ्गलनागः शिवप्रसादाद्विशुद्धमतिः ॥ ४ ॥

(क) सकलशास्त्रनिष्णातबुद्धिस्तत्रभवान् हलायुधो वृत्तिकारः स्ववृत्तिनिर्विघ्नपरिसमाप्ति-कामो ग्रन्थादौ शिवं प्रणमति—नम इति । तुङ्गम् अत्युन्नतं, कदाचिदपि न प्रह्वीभूतं सर्वेषां नमस्यत्वादित्यर्थः । एवंविधं यत् शिरः, तत् चुम्बितुम्, अन्यतरवाच्यत्वबोधेन सर्वात्मना स्पृशतु शीलमस्य तादृशश्चन्द्र एव चामरस्तेन चारवे मनोज्ञाय । त्रैलोक्यं त्रिभुवनमेव नगरं पत्तनं तस्य आरम्भे आदौ, निर्म्माणे इति वा, मूलस्तम्भाय मूलस्तम्भस्वरूपाय बीजरूपाय आदिकारणाय इत्यर्थः, नमः नमस्कारोऽस्तु ॥

त्रिगुरुं विद्धि मकारं लघ्वादिसमन्वितं यकाराख्यम्।
लघुमध्यमस्य रेफं सकारमन्ते गुरुनिबद्धम् ॥ ५ ॥
लघ्वन्त्यं हि तकारं जकारमुभयोर्लघुं विजानीयात्।
आदिगुरुश्च भकारं नकारमिह पैङ्गले त्रिलघुम् ॥ (ख)
दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम्।
सानुस्वारश्च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम् ॥ ७ ॥ (ग)
आदिमध्यावसानेषु य-र-ता यान्ति लाघवम्।
भ-ज-सा गौरवं यान्ति म-नौ तु गुरुलाघवम् ॥ ८ ॥
त्रिविरामं दशवर्णं षण्मात्रमुवाच पिङ्गलः सूत्रम्।
छन्दोवर्गपदार्थप्रत्ययहेतोश्च शास्त्रादौ ॥ ९ ॥ (घ)

इह हि त्रैवर्णिकानां साङ्गवेदाध्ययनमाम्नायते (ङ)। अथाव-

(ख) पैङ्गले पिङ्गलमुनिकृतच्छन्दःशास्त्रे। "मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः। जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥" गुरुरेको गकारस्तु लकारो लघुरेककः।" इति गङ्गादासः।

(ग) दीर्घमिति। संयोगः संयुक्तवर्णः परो यस्मात् तं संयोगपरं, संयुक्तवर्णात् पूर्वस्थितमित्यर्थः, अतः संयोगपदेन संयुक्तवर्णो ज्ञातव्यः। व्यञ्जनान्तमित्यनेनैवोष्मान्तस्यापि चरितार्थत्वात् ऊष्मशब्देन विसर्जनीयस्य तदुत्पन्नजिह्वामूलीयोपध्मानीययोरपि ग्रहणम्। यथोक्तं पाणिनीयशिक्षाप्रकरणे—"ओभावश्च विवृत्तिश्च शषसा रेफ एव च। जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥" इत्यत्र ऊष्मशब्दो विसर्गपरः।

(घ) प्रथमसूत्रं (धीश्रीस्त्रीम्) सङ्केतेन प्रतिपादयति—त्रिविराममित्यादि। त्रयो विरामाः विच्छेदाः यत्रेति त्रिविरामम्। दश वर्णा ध् ई श् र् ई स् त् र् ई म् इत्येवंरूपा यत्र तदिति। षण्मात्रं षट् मात्रा यत्र तदिति।

(ङ) इहेति। 'उपनीतमध्यापयीत' इति श्रुतेस्त्रैवर्णिकानामेव साङ्गवेदाध्ययनं कर्त्तव्यम्। 'उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥" इति स्मृतेश्च स्वाध्याये यस्य कस्यचिदुपनीतस्यैवाधिकारः, उपनीतत्वञ्च ब्राह्मणक्षत्रियवैश्यानां त्रैवर्णिकानामेव। तथाच—'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्य'मिति कमलाकरधृतश्रुतिः।

बोधपर्य्यन्तस्याध्ययनविधिः। (च) वेदाङ्गञ्च छन्दः। ततस्तदध्ययनं विधिबोधितत्वादनुष्ठेयम्। अथ अनुष्टुभा यजति, बृहत्या गायति, गायत्र्या स्तौतीत्येवमादिश्रवणादर्थायातमनुष्टुभादिज्ञानम्। किञ्च छन्दसामपरिज्ञानात् प्रत्युत प्रत्यवायः श्रूयते। यथा—"यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन (छ)ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स स्थाणुं वर्च्छति गर्त्तं वा पद्यते प्रमीयते वा पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति" (ज) इति। तस्माच्छन्दःपरिज्ञानं कर्त्तव्यम्। तदर्थमिदं शास्त्रमारभ्यते। तत्र लघुनोपायेन शास्त्रावबोधसिद्ध्यर्थं संज्ञाः परिभाषते सूत्रकारः॥—

## धीश्रीस्त्री म्॥ १॥

धीश्रीस्त्री इत्यनेन गुरुत्रयं संज्ञित्वेनोपलक्षयति, मकारश्च संज्ञात्वेन। ततश्चायमर्थः—सर्व्वगुरोस्त्रिकस्य 'म'संज्ञा परिभाष्यते। ध्यादीनामुपादानप्रयोजनमुपरिष्टाद् वक्ष्यामः। मप्रदेशाः—"विद्युन्माला मौ गौ" इत्येवमादयः॥

১ অনু। প্রত্যেক ছন্দঃশাস্ত্রপ্রণেতাই সঙ্কেত দ্বারা ছন্দের লক্ষণ প্রকটিত করিয়া থাকেন। পিঙ্গলসূত্রেও সেই নিয়মের ব্যতিক্রম ঘটে নাই। ইহাতে ম, য, র, স, ত, জ, ভ, ন, গ, এবং ল এই দশটী অক্ষর দ্বারা সমস্ত ছন্দোবিষয়ক

(च) तथाच निरुक्तवचनं—'यदधीतमविज्ञातं निगदेनैव शब्द्यते'—इत्यादि।

(छ) आर्षेय इति। ऋषयोऽनागतातीतवर्त्तमानार्थवेदिनः। ऋषेः सर्व्वतैः क्विपि च ऋषिशब्दो निरुच्यते॥" तस्यायम् आर्षेयः। दैवतशब्दात् स्वार्थे अण्, 'दैवतं पुंनपुंसकम्' इति लिङ्गानुशासनम्।

(ज) स्थाणुमिति—स्थाणुं वृक्षादियोनिम्, ऋच्छति प्राप्नोति। गर्त्तं नरकं। प्रमीयते वा कदाचिदपि वेदोक्तमायुर्न लभते। यातेति। यातः प्राप्तः यामः फलोत्पत्तिविषये जीवनाशौच्यं येषामिति। अथवा 'यातयामो जीर्णभुक्तोज्झितं' इति निघण्टुवचनात् यातयामशब्दो जीर्णभुक्तोज्झिते वाचको वर्त्तते इति।

## বরা সা য্ ॥ ২ ॥

বরা সা ইত্যনেনাদিলঘোস্ত্রিকস্য 'য'—সংজ্ঞা পরিভাষ্যতে। য-প্রদেশাঃ—"ভুজঙ্গপ্রয়াতং যঃ" ইত্যেবমাদয়ঃ ॥

## কা গুহা র্ ॥ ৩ ॥

কা গুহা ইত্যনেন মধ্যলঘোস্ত্রিকস্য 'র'—সংজ্ঞা পরিভাষ্যতে। রপ্রদেশাঃ—"স্রগ্বিণী রঃ" ইত্যেবমাদয়ঃ ॥

সঙ্কেত সুব্যক্ত করা হইয়াছে। এই দশটী অক্ষরই যাবতীয় ছন্দঃশিক্ষার মূল। তিন তিনটী অক্ষর একত্র ধরিয়াই ছন্দঃ ঠিক করিতে হয়। ইহাকে 'গণ' বলে। ছন্দঃশাস্ত্রে পূর্ব্বোক্ত ম হইতে ত পর্য্যন্ত মোট আটটী গণ। গ ও ল দ্বারা কেবল এক একটির পরিচয় হয়, তিন অক্ষরের নহে। পর পর তিনটী অক্ষর গুরু হইলে তাহা কি সংজ্ঞায় অভিহিত হইবে—এই উদ্দেশ্যে গ্রন্থকার বলিতেছেন—ক্রমে তিনটী অক্ষর গুরু হইলে তাহার 'ম' সংজ্ঞা জানিবে। অর্থাৎ যে স্থলে 'ম' দেখিবে, সেই স্থলেই ক্রমে তিনটী বর্ণ গুরু বুঝিতে হইবে। এই সূত্রে 'ধী' 'শ্রী' 'স্ত্রী', এই তিনটীই গুরু হইয়াছে। প্রথম সূত্র হইতে অষ্টম সূত্র পর্য্যন্ত প্রত্যেক সূত্রেরই প্রথম তিন তিনটী অক্ষর স্ব স্ব গুরুত্ব ও লঘুত্ব-অনুসারে তিন তিনটী গুরুলঘু বর্ণের জ্ঞাপক। অন্যত্রও এইরূপ ব্যবস্থা। ধী প্রভৃতি দ্বারা কেন নির্দ্দেশ করা হইল,—তাহা পরে (১৫ সূত্রে) বলা হইবে। "বিদ্যুন্মালা মৌ গৌ" ইত্যাদি সূত্র 'ম' সংজ্ঞার প্রয়োজন-স্থল। এই গ্রন্থে গুরু বর্ণের চিহ্ন (ऽ) এবং লঘু বর্ণের চিহ্ন (।) এইরূপ প্রদত্ত হইবে।

২ অনু। যে তিনটী বর্ণের আদি বর্ণ লঘু, সেই তিনটী বর্ণের নাম 'য'। অর্থাৎ যে তিন অক্ষরের প্রথম অক্ষরটী মাত্র লঘু এবং মধ্যের ও শেষের অক্ষর গুরু, তাহাকে 'য' সংজ্ঞা বলিয়া জানিবে। 'ভুজঙ্গপ্রয়াতং যঃ' ইত্যাদি সূত্র এই সংজ্ঞার প্রয়োজন-স্থল।

৩ অনু। যে তিনটী বর্ণের মধ্য বর্ণটী মাত্র লঘু (আদি ও অন্তের অক্ষর গুরু) সেই তিনটী বর্ণকে 'র' বলে। 'স্রগ্বিণী রঃ' ইত্যাদি সূত্র প্রয়োজনস্থল।

## वसुधा स् ॥ ४ ॥

वसुधा इत्यनेनान्तगुरोस्त्रिकस्य 'स'—संज्ञा परिभाष्यते। स प्रदेशाः—"तोटकं सः" इत्येवमादयः ॥

## सा ते क्व त् ॥ ५ ॥

सा ते क्व इत्यनेनान्तलघोस्त्रिकस्य 'त'—संज्ञा परिभाष्यते। तप्रदेशाः—"तनुमध्या त्यौ" इत्येवमादयः ॥

## कदा स ज् ॥ ६ ॥

कदा स इत्यनेन मध्यगुरोस्त्रिकस्य 'ज'—संज्ञा परिभाष्यते। जप्रदेशाः—"कुमारललिता ज्सौ ग्" इत्येवमादयः ॥

## किं वद भ् ॥ ७ ॥

किं वद इत्यनेनादिगुरोस्त्रिकस्य 'भ'—संज्ञा परिभाष्यते। भप्रदेशाः—"चित्रपदा भौ गौ" इत्येवमादयः ॥

## न हस न् ॥ ८ ॥

न हस इत्यनेन सर्व्वलघोस्त्रिकस्य 'न'—संज्ञा परिभाष्यते। नप्रदेशाः—"दण्डको नौ रः" इत्येवमादयः ॥ (क) ॥

৪ অনু। অন্তগুরু ( অর্থাৎ আদি ও মধ্যবর্ণ লঘু, মাত্র শেষ অক্ষরটী গুরু ) তিনটী বর্ণকে 'স' বলে। "তোটকং সঃ" ইত্যাদি সূত্র 'স' সংজ্ঞার প্রয়োজন-স্থল।

৫ অনু। অন্তলঘু ( অর্থাৎ আদি ও মধ্যবর্ণটী গুরু, কেবল শেষ বর্ণটী লঘু ) তিনটী বর্ণকে "ত" বলে। "তনুমধ্যা ত্যৌ"ইত্যাদি সূত্র'ত'সংজ্ঞার প্রয়োজনস্থল।

৬ অনু। মধ্যগুরু ( অর্থাৎ আদি ও অন্তবর্ণ লঘু, মধ্যবর্ণটী গুরু ) তিনটী বর্ণকে "জ" বলে। "কুমারললিতা জ্সৌ গ্"ইত্যাদি সূত্র'জ'সংজ্ঞার প্রয়োজনস্থল।

৭ অনু। আদি বর্ণ গুরু, মধ্য ও অন্ত বর্ণ দুইটী লঘু, এইরূপ তিনটী বর্ণের "ভ" সংজ্ঞা হয়। "চিত্রপদা ভৌ গৌ" ইত্যাদি সূত্র 'ভ' সংজ্ঞার প্রয়োজনস্থল।

৮ অনু। ক্রমশঃ তিনটী লঘু বর্ণের "ন" সংজ্ঞা হয়। "দণ্ডকো নৌ রঃ" ইত্যাদি সূত্র 'ন' সংজ্ঞার প্রয়োজনস্থল।

(क) विशेषमाह गणविषये चन्द्रशेखरः—पृथिवीजलशिखिपवना व्योमार्कौ चन्द्रनाग्गान् क्रमशः।

### ग्ट ल् ॥ ९ ॥

ग्ट इत्यनेनोपलक्षितस्य ह्रस्वस्य 'ल'—संज्ञा परिभाष्यते। लशब्दश्च लघुवाचकः। तेन ह्रस्वमक्षरं 'लघु'-संज्ञं भवतीत्यर्थः सम्पद्यते। लप्रदेशाः—"लः समुद्रा गणः" इत्येवमादयः ॥

### गन्ते ॥ १० ॥

ग्टग्रहणमनुवर्त्तते। ग्टशब्दोपलक्षितस्य ह्रस्वस्य पादान्ते वर्त्तमानस्य गुरुसंज्ञाऽतिदिश्यते। ग् इति प्रथमाक्षरप्रतीकेन गुरुशब्दस्य ग्रहणम्। ननु समानीगीत्यार्य्यादीनां पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वं न दृश्यते। नैष दोषः। सर्व्वत्र पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्व-मुत्सर्गसिद्धम्। तच्च लकारश्रुत्याऽपवादेन बाध्यते। यथा—'ग्लिति समानी', 'गीत्यार्य्या ल' इत्यादौ सामान्यस्य विशेषेण बाधः कस्य न सम्मतः? तस्मात् कुचोद्यमेतत्। केचिदिदं सूत्रं व्यवस्थितविभाषया व्याचक्षते, 'प्रमाण्या'दीनामन्ते गुरुत्वमेव 'समान्या'दीनामन्ते लघुत्व-मेव, तस्मादियं व्यवस्था प्रमाणम्। शेषाणामिच्छया गुरुत्वं लघुत्वञ्चेति

৯ অনু। গ্ এই বর্ণ গ্রহণ দ্বারা একটীমাত্র লঘু বর্ণের পরিচায়ক হইয়াছে। একটী লঘুবর্ণকে "ল" বলে, পূর্ব্বেই বলিয়াছি, গ এবং ল তিনটী বর্ণের প রিচায়ক নহে। 'গুরুরেকো গকারস্তু লকারো লঘুরেকক' ইত্যাদি। ল শব্দের অর্থ লঘু, সুতরাং এই সূত্র দ্বারাই হ্রস্ববর্ণের লঘুসংজ্ঞা কথিত হইল। "লঃ সমুদ্রা গণঃ" ইত্যাদি সূত্র 'ল' সংজ্ঞার প্রয়োজন-স্থল।

---

इत्यष्टौ गणदेवान् पिङ्गलकथितान् विजानीयात् ॥ मगणविलघु मित्रे भयौ भयगणौ स्मृतौ। उदासीनौ जतगणावरीरसगणौ मतौ ॥ यगणश्चर्द्धिकार्य्ये सगणः सुखसम्पदो धत्ते। रगणो ददाति मरणं मगणो देशाद्विवासयति ॥ तगणः शून्यं तनुते जगणो रुजमादधात्येव। भगणो मङ्गलदायो नगणः सकलं फलं दिशति। पद्यस्यादौ कविना बोद्धव्यः सर्व्वथा यत्नात् सम्यगपि। दुष्टा रसतजा यस्मादधनादीनां विनाशकाः। काव्यस्यादौ न दातव्या इति च्छन्दोविदो जगुः ॥ यदा दैववशादाद्यो गणो दुष्टफलो भवेत्। तदा तद्दोषनाशार्थं शोध्यः स्यादपरो गणः ॥ प्रतिप्रसवमाह भामहः—देवतावाचकाः शब्दा ये च भद्रादिवाचकाः। ते सर्व्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥

तदनुपपन्नम् ; विकल्पस्याप्रस्तुतत्वात् कस्य व्यवस्थेति न विद्मः ॥ ननु केनाप्युक्तं—"वा पादान्ते त्वक्र" इति गुरुत्वम्, सत्यमुक्तम्, दुरुक्तं हि तत्। "वान्ते त्वक्र इति प्रोक्तं यैस्तु श्वेतपटादिभिः (१)। उत्सर्गस्यापवादेन बाधस्तैर्नावधारितः" —इत्युक्तेः। इच्छया गुरुत्वं लघुत्वञ्च नोपपद्यते। कस्येच्छया ? किं शास्त्रकारस्य कवेर्वा ? न तावदाद्यः पक्षः, सूत्रेष्वदर्शनात्। नापि द्वितीयः, कवेरपीच्छायां व्यवस्थाभावात्। को जानाति कस्य कीदृशीच्छेति ॥ अन्ये त्वाहुः— ननु पादान्ते वर्त्तमानस्य ह्रस्वस्य पाणिनिना गुरुसंज्ञा न कृता। तेनोक्तं—"संयोगे गुरुः दीर्घञ्च" (१।४।११—१२) इति। नायं संयोगादिर्न च दीर्घः। तस्माद् 'गन्ते' इति सूत्रमयुक्तम्। अत्रोच्यते— पाणिनिना—स्वशास्त्रप्रयोजनार्थं गुरुसंज्ञा कृता, 'गुरोश्च हलः' (३।३। १०३) इत्यकारप्रत्ययो यथा स्यात् कुण्डा हुण्डेत्यादौ ; ईहाञ्चक्रे ऊहाञ्चक्रे इत्येवमादिषु "इजादेश्च गुरुमतोऽनृच्छः" इति (३।१।३६ सूत्रेणाम्प्रत्ययश्च। पादान्ते वर्त्तमानस्य लघोर्गुरुत्वातिदेशे पाणिनेः प्रयोजनमेव नास्ति। किञ्च, अनुस्वारादिपूर्वस्य वर्णस्य बलं सम्पदित्यादौ स्थितस्य गुरुसंज्ञा पाणिनिना न कृता, किमेतावतान्यैरपि न कर्त्तव्या ? तस्मात् सूत्र[क्त]मिदं 'गन्ते' इति। गप्रदेशाः—"गावन्त आपीड" इत्येवमादयः ॥

১০ অনু। এই সূত্র দ্বারা পদের অন্তস্থিত লঘুবর্ণের "গ" অর্থাৎ গুরুসংজ্ঞা অতিদিষ্ট হইল। 'গাবন্ত আপীড়ঃ" ইত্যাদি সূত্র "গ" সংজ্ঞার প্রয়োজনস্থল।

---

(१) श्वेतपटादिभिः जैनादिभिः। आदिशब्देन वृत्तरत्नाकरादीनां ग्रहणम्। दृश्यते हि वृत्तरत्नाकरे—'सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः। वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लघुः।' श्रुतबोधेऽपि—'विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन' इति। अत्र सार्व्वभौमानामयमाशयः—पादान्ते लघुस्वरस्य क्वचिद् गुरुत्वं क्वचिल्लघुत्वं दृश्यते। तथाच—'जवनिवासो वसुदेवसद्मनि' इत्यत्र पादान्तेकारस्य गुरुत्वं तेन 'वंशस्था ज् तौ रतौ' इति सूत्रात् वंशस्थवृत्तत्वं सिद्धं, म्लिति समानीत्यत्र लघुत्वम्, अतो व्यवस्थितविभाषा युक्तेति—वृत्तिकारस्यैवं समाधानं न रुचिकरं, यत उत्सर्गापवादन्यायेनैवाभिमतसिद्धौ व्यवस्थितविकल्पकल्पनं दुरुक्तमेवेति।

## গ্লাদিপরঃ ॥ ১১ ॥

গ্ল ইতি ব্যঞ্জনসংযোগস্যোপলক্ষণার্থম্। গ্ল আদির্যেষাং তে গ্লাদয়ঃ। আদিপদেন বিসর্জ্জনীয়ানুস্বারজিহ্বামূলীয়োপধ্মানীয়ানাং গ্রহণম্। গ্লাদয়ঃ পরে যস্মাৎ স গ্লাদিপরঃ। ততশ্চায়ং সূত্রার্থঃ—ব্যঞ্জনসংযোগাৎ পূর্ব্বস্য হ্রস্বস্যানুস্বারবিসর্জনীয়জিহ্বামূলীয়োপধ্মানীয়েভ্যশ্চ গুরুসংজ্ঞাতিদিশ্যতে ॥ (২)

## হে ॥ ১২ ॥

গ ইত্যনুবর্ত্ততে। হে ইতি দ্বিমাত্রোপলক্ষণার্থম্। ততশ্চায়ং সূত্রার্থঃ—দ্বিমাত্রস্য দীর্ঘস্য 'গ'-সংজ্ঞা ক্রিয়তে ॥

## লৌ সঃ ॥ ১৩ ॥

স ইতি গকারস্য পরামর্শঃ,—স গকারো দ্বিমাত্রো দ্বৌ লঘূ কৃত্বা গণয়িতব্যঃ ॥

## গ্লৌ ॥ ১৪ ॥

অধিকারোঽয়মাশাস্ত্রপরিসমাপ্তেঃ। যত্র বিশেষান্তরং ন শ্রূয়তে, তত্র গ্লাবিত্যুপতিষ্ঠতে। 'গায়ত্র্যা বসবঃ' (২।৩) ইত্যেবমাদিবৎ শ্রুতৌনেহ ব্যবহারো নাস্তি ॥

১১ অনু। সংযুক্ত ব্যঞ্জনবর্ণের পূর্ব্ববর্ণ ও অনুস্বার, বিসর্গ, জিহ্বামূলীয়, (কবর্গ) উপধ্মানীয় বর্ণের পূর্ব্ব লঘু বর্ণের গুরুসংজ্ঞা অতিদিষ্ট হইল।

১২ অনু। দ্বিমাত্র দীর্ঘ বর্ণের "গ" অর্থাৎ গুরুসংজ্ঞাবিধান হইল।

১৩ অনু। সেই দ্বিমাত্র গুরুবর্ণকে দুইটী লঘুরূপে গণনা করিতে হইবে।

১৪ অনু। বিশেষ বিধি পরিত্যাগ করিয়া গ্রন্থপরিসমাপ্তি পর্য্যন্ত "গ্লৌ" এই বর্ণটী অধিকৃত হইবে, যেমন "আসুরী পঞ্চদশ" ২।৪। এই সূত্রে বৃত্তিকার লিখিয়াছেন—"তানি চ অক্ষরাণি গ্লৌ ইত্যধিকারবশাৎ গুরূণি লঘূনি চ—" ইত্যাদি।

---

(২) অত্র চন্দ্রশেখরঃ—রেফহকারব্যঞ্জনসংযোগাৎ পূর্ব্বং স্খলিতস্য ভবেৎ। বৈকল্পিকং লঘুত্বং বর্ণস্যোদাহরন্তি বিদ্বাংসঃ।

## अष्टौ वसव इति ॥ १५ ॥

अत्र शास्त्रे वसव इत्युच्यमाने अष्टसंख्योपलक्षिता गुरुलघुरूपा वर्णा गृह्यन्ते। लौकिकप्रसिद्धप्रसंख्योपलक्षणार्थमिदं सूत्रम्। तेन चतुर्णां समुद्राः पञ्चानामिन्द्रियाणि इत्येवमादयः संज्ञाविशेषा लौकिकेभ्यः प्रत्येतव्याः। इतिकारोऽध्यायसमाप्तिसूचकः॥

इह ध्यादीनामुपादानप्रयोजनं वर्ण्यते। अध्ययनाद्धीर्भवति। यस्य धीस्तस्य श्रीः, बुद्धिपूर्वकत्वाद्विभूतेः। यस्य श्रीस्तस्य स्त्री, अर्थमूलकत्वाद्गार्हस्थ्यस्य। 'वरा सा' इत्यनेन सर्वेषां स्त्रीसाधनोपायानां बुद्धेरुपायस्य माहात्म्यं दर्शयति। तथाचोक्तम्—

"अर्वाङ्कुलपरीणाहजिह्वाग्रायासभीरवः।
सर्वाङ्गीणपरिक्लेशमबुधाः कर्म्म कुर्व्वते॥"

तत्राह शिष्यः—'का गुहा ?' गुहाशब्दः स्थानवाचकः। 'का गुहा' यत्रासौ तिष्ठति। उपाध्यायो ब्रूते—'वसुधा' पृथिव्यां लभ्यते धीर्नात्र विषादः कर्त्तव्यः। पुनरप्याह शिष्यः—'सा ते क्व' ? 'सा' धीस्त्वयोपदिष्टा पृथिव्यां 'क्व' स्थितेन लभ्यते। गुरुराह—'गृहे।' पुनराह शिष्यः—'कदा सः ?' 'स गृहस्थः पुरुषः' 'कदा' कस्मिन् काले तां धियं प्राप्नोति। अत्रोत्तरं—'शास्त्रपरः।' शास्त्रार्थावबोधपरोऽसौ यदा स्यात्तदा धियं लभते। भूयोऽपि प्रश्नः—'किं वद।' 'किं कुर्व्वन्नसौ तां धियं लभते' तद् 'वद'। तत्रोत्तरम्—'न हसन्।' हासादिचापल्यमकुर्व्वाणस्तां धियं लभत इत्यर्थः॥

इति भट्टहलायुधकृतायां छन्दोवृत्तौ प्रथमोऽध्यायः॥ १॥

১৫। এই ছন্দঃশাস্ত্রে বসু শব্দে গুরু লঘু আটটী বর্ণকে বুঝাইবে। লোক প্রসিদ্ধ অন্য শব্দ গ্রহণের উপলক্ষণ এই সূত্রটী। অর্থাৎ যেমন বসু শব্দে ৮ বুঝাইবে তদ্রূপ সমুদ্র শব্দে ৪ ইন্দ্রিয় শব্দে ৫ ইত্যাদি। যে যে অর্থে যে যে শব্দ লোকপ্রসিদ্ধ আছে, এই ছন্দঃশাস্ত্রেও সেই সেই অর্থে সেই সেই শব্দের প্রয়োজন হইবে।

| | छं० | गा० | उ० | अ० | बृ० | प० | त्रि० | ज० |
|---|---|---|---|---|---|---|---|---|
| १ | आर्षी० | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| २ | दैवी० | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ३ | आसु० | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| ४ | प्राजा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| ५ | याजु० | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ६ | साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| ७ | आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ८ | ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

## छन्दः ॥ १ ॥ (क)

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । इत ऊर्द्ध्वं यदुवक्ष्यामश्छन्दस्तत्रोपतिष्ठते । छन्दःशब्देनाक्षरसंख्यावच्छन्दोऽत्राभिधीयते ॥

## गायत्री ॥ २ ॥ (ख)

अधिकारोऽयमाद्वादशसूत्रपरिसमाप्तेः । "तान्युष्णिक्" इत्यादि सूत्रात् प्राग् यदुच्यते छन्दस्तद्गायत्रीसंज्ञं वेदितव्यम् ॥

১। ইহার পর শাস্ত্রপরিসমাপ্তিপর্য্যন্ত "ছন্দঃ" ইহা অধিকৃত হইবে। এই ছন্দঃশব্দে অক্ষরসংখ্যা কথিত হইল।

২। এই সূত্র হইতে দ্বাদশ সূত্র পর্য্যন্ত "গায়ত্রী" ছন্দঃ অধিকার যাইবে। অর্থাৎ "তান্যুষ্ণিক্" এই সূত্রের পূর্ব্ব পর্য্যন্ত বক্ষ্যমাণ ছন্দের গায়ত্রী সংজ্ঞা হইবে।

---

(क) छन्द संवरणे छादयति वर्णान् तथाच नैरुक्तं—छन्दांसि छादनात् ।

(ख) गायन्तेव गायती पायवति च सा गायत्री । या वै खलु गायति तथा संसारे गायत्रि[illegible],

## দৈব্যেকম্ ॥ ৩ ॥

একাক্ষরং ছন্দো দৈবী গায়ত্রীতি সংজ্ঞায়তে। তত্রায়ং প্রদর্শনোপায়ঃ।— চতুরঙ্গক্রীড়ায়ামিব চতুঃষষ্টিকোষ্ঠান্ লিখিত্বা (প্রথমপঙ্‌ক্তৌ আর্ষী নাম লিখিত্বা দ্বিতীয়াদিকোষ্ঠেষু অঙ্কানামুপরি গায়ত্র্যাদি-সপ্তচ্ছন্দসাং নামানি বিন্যসেৎ) তত্র দ্বিতীয়ায়াং পঙ্‌ক্তৌ প্রথমে কোষ্ঠে দৈবীশব্দং বিন্যসেৎ সংজ্ঞাজ্ঞাপনার্থম্, দ্বিতীয়ে একসংখ্যাঙ্কং বিন্যসেৎ ॥

## আসুরী পঞ্চদশ ॥ ৪ ॥

আসুরী গায়ত্রী পঞ্চদশাক্ষরা। তানি চাক্ষরাণি "স্ত্রৌ" (১।১৪) ইত্যধিকারাৎ গুরূণি লঘূনি চ যথাসম্ভবং দ্রষ্টব্যানি। তত্র তৃতীয়ায়াং পঙ্‌ক্তৌ প্রথমে কোষ্ঠে আসুরীশব্দং ব্যবস্থাপ্য দ্বিতীয়ে পঞ্চদশ-সংখ্যাঙ্কং বিন্যসেৎ ॥

## প্রাজাপত্যাঽষ্টৌ ॥ ৫ ॥

প্রাজাপত্যা গায়ত্রী অষ্টাক্ষরা ভবতি। যত্র ক্বচিদ্দেবোঽষ্টা-

৩। একাক্ষরছন্দকে 'দৈবী গায়ত্রী' বলে; গায়ত্রী উষ্ণিক্ প্রভৃতি সাত প্রকার ছন্দের প্রত্যেকটীই আর্ষী, দৈবী, আসুরী, প্রাজাপত্যা, যাজুষী, সাম্নী, আর্চ্চী ও ব্রাহ্মী ভেদে ৮ প্রকার। কোন্‌টী কত অক্ষরে কোন্ প্রকারের অন্তর্গত হইবে, তাহা ভালরূপে বুঝাইবার জন্য (১০ পৃঃ) মণ্ডলটী দেওয়া হইয়াছে। উহা আঁকিবার প্রণালী যথা—চতুরঙ্গ ক্রীড়ার ন্যায় আট পঙ্‌ক্তিতে ৬৪ চৌষট্টিটী কোষ্ঠ দ্বারা একটী মণ্ডল আঁকিবে। পরে তাহার প্রথম পঙ্‌ক্তির প্রথম কোঠে আর্ষী এই নাম লিখিবে। দ্বিতীয়াদি ঘরে উপরিভাগের ক্রমানুসারে গায়ত্রী, উষ্ণিক্, অনুষ্টুপ্, বৃহতী, পঙ্‌ক্তি, ত্রিষ্টুপ ও জগতী ছন্দের নাম লিখিবে। পরে দ্বিতীয় পঙ্‌ক্তির প্রথম ঘরে "দৈবী" শব্দটী লিখিয়া সংজ্ঞা বুঝাইবার জন্য দ্বিতীয় ঘরে ১ অঙ্ক বসাইবে।

৪। পঞ্চদশাক্ষর ছন্দের নাম 'আসুরী' গায়ত্রী। পূর্ব্বোক্ত মণ্ডলের তৃতীয় পংক্তির প্রথম ঘরে "আসুরী" এই নাম লিখিয়া দ্বিতীয় ঘরে ১৫ অঙ্ক বসাইবে।

---

তদুচ্চরন্তী গায়ন্তং ভজধ্বমিতি স্বয়ং প্রবর্ত্তয়তি চ। তথাকুর্বাণং দুঃখাজ্জন্মাৎ সংসারাৎ ত্রায়তে পালয়তি চ সা গায়ত্রী নামেতি। অতএব আর্ষনির্বচনং—"গায়ন্তং ত্রায়তে যস্মাৎ গায়ত্রী তেন সা স্মৃতা" ইতি।

क्षरं छन्दस्तत्प्राजापत्या गायत्रीति ज्ञेयम्। तत्र चतुर्थ्यां पङ्क्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं व्यवस्थाप्य द्वितीये अष्टसंख्याङ्कं लिखेत्॥

## यजुषां षट्॥ ६॥

यजुषां गायत्री षडक्षरा भवति। यत्र क्वचिद्वेदे षडक्षरं छन्दस्तद्याजुषी गायत्रीति संज्ञायते। तत्र पञ्चम्यां पङ्क्तौ प्रथमे कोष्ठे याजुषीशब्दं व्यवस्थाप्य द्वितीये षट्संख्याङ्कं लिखेत्॥

## साम्नां द्विः॥ ७॥

षडित्यनुवर्त्तते। द्विरिति क्रियाभ्यावृत्तिदर्शनात् करोतिरध्याक्रियते। द्वादशाक्षरेत्यभ्यावृत्त्या क्रियते। तेन द्विःकृता द्विगुणिता षट्संख्या साम्नां गायत्री भवति। यत्र क्वचिद्वेदे द्वादशाक्षरं छन्दः, तत् साम्नी गायत्रीति संज्ञायते। तत्र षष्ठ्यां पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादशसंख्याङ्कं लिखेत्॥

## ऋचां त्रिः॥ ८॥

षडित्यनुवर्त्तते। अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणिता

৫। আট অক্ষর ছন্দকে "প্রাজাপত্যা" গায়ত্রী বলে। সেই মণ্ডলের চতুর্থ পঙ্‌ক্তির প্রথম ঘরে "প্রাজাপত্যা" এই নাম লিখিয়া দ্বিতীয় কোষ্ঠে ৮ অঙ্ক বসাইবে।

৬। বেদোক্ত ষড়ক্ষর ছন্দকে "যাজুষী" গায়ত্রী বলে। সেই মণ্ডলের পঞ্চম পঙ্‌ক্তির প্রথম ঘরে "যাজুষী" এই নাম বসাইয়া দ্বিতীয় ঘরে ৬ অঙ্ক লিখিবে।

৭। বেদোক্ত দ্বাদশাক্ষর ছন্দের নাম 'সাম্নী' গায়ত্রী। সেই মণ্ডলের ষষ্ঠ পঙ্‌ক্তির প্রথম ঘরে "সাম্নী" এই নাম লিখিয়া দ্বিতীয় ঘরে ১২ অঙ্ক বসাইবে।

৮। বেদোক্ত অষ্টাদশাক্ষর ছন্দকে 'আর্চ্চী' গায়ত্রী বলে। সেই মণ্ডলের

षट्संख्या ऋचां गायत्री भवति। यत्र क्वचिदष्टादशाक्षरं छन्दस्तदृचां गायत्रीति संज्ञायते। तत्र सप्तम्यां पङ्क्तौ प्रथमे कोष्ठे ऋक्शब्दं व्यवस्थाप्य द्वितीयेऽष्टादशसंख्याङ्कं लिखेत्॥

## द्वौ द्वौ साम्नां वर्द्धेत ॥ ९ ॥

गायत्रीत्यनुवर्त्तते। साम्नां पङ्क्तौ गायत्री द्वौ द्वौ संख्याङ्कौ गृहीत्वा पूर्वात् पूर्वात् वर्द्धेत, यावदष्टमं कोष्ठं प्राप्नोति। तत्र साम्नां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण वर्द्धितान्यक्षराण्यङ्केन विन्यसेत्॥

## त्रींस्त्रीनृचाम् ॥ १० ॥

गायत्रीत्यनुवर्त्तते। ऋचां गायत्री त्रींस्त्रीन् संख्याङ्कान् गृहीत्वा पूर्व्ववद्वर्द्धेत। अत्रापि ऋचां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण वृद्ध्यमङ्कं स्थापयेत्॥

সপ্তম পঙ্‌ক্তির প্রথম ঘরে "আর্চ্চী" এই নাম লিখিয়া দ্বিতীয় ঘরে ১৮ অঙ্ক বসাইবে।

৯। ষষ্ঠ পঙ্‌ক্তিতে সাম্নী গায়ত্রীর অঙ্ক দুই দুই সংখ্যা দ্বারা পরিবর্দ্ধিত হইয়া যথাক্রমে তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত বসিবে। অর্থাৎ দ্বিতীয় ঘরে যে সাম্নী গায়ত্রীর অঙ্ক ১২ আছে, তাহা দুই দ্বারা বর্দ্ধিত হইয়া তৃতীয় ঘরে ১৪ চতুর্থ ঘরে ১৬, পঞ্চম ঘরে ১৮, ষষ্ঠ ঘরে ২০, সপ্তম ঘরে ২২ ও অষ্টম ঘরে ২৪ হইবে।

১০। সপ্তম পঙ্‌ক্তিতে আর্চ্চী গায়ত্রী তিন তিন সংখ্যা দ্বারা পরিবর্দ্ধিত হইয়া তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ দ্বিতীয় ঘরে যে আর্চ্চী গায়ত্রীর ১৮ সংখ্যা আছে, উহা তিন দ্বারা পরিবর্দ্ধিত হইয়া তৃতীয় ঘরে ২১, চতুর্থ ঘরে ২৪, পঞ্চম ঘরে ২৭, ষষ্ঠ ঘরে ৩০, সপ্তম ঘরে ৩৩ ও অষ্টম ঘরে ৩৬ বসিবে।

## चतुश्चतुरः प्राजापत्यायाः ॥ ११ ॥

प्राजापत्यायाः पङ्‌क्तौ गायत्री चतुरश्चतुरः संख्याङ्कान्‌ गृहीत्वा वर्द्धेत । अत्रापि द्वितीयादिषु कोष्ठेषु विन्यासः पूर्व्ववदेव ॥

## एकैकं शेषे ॥ १२ ॥

अनुक्तः शेषः । यत्र गायत्र्यां संख्यावृद्धिर्नोक्ता सा एकैकं संख्याङ्कं गृहीत्वा वर्द्धेत । दैवी याजुषी च शेषशब्देनोच्यते, आसुर्य्यां विशेषाभिधानात्‌ । तेन दैवी तृतीयादिषु कोष्ठेषु एकैकमङ्कं गृहीत्वा वर्द्धेत तथैव याजुषी ॥

## जह्यादासुरी ॥ १३ ॥

एकैकमित्यनुवर्त्तते । आसुरी गायत्री एकैकमक्षरं त्यजेत्‌ । उत्तरेषु कोष्ठेषु हानौ प्राप्तायां ह्रासो विधीयते । तेऽङ्काः क्रमेण स्थाप्याः ॥

১১। চতুর্থ পঙ্‌ক্তিতে প্রাজাপত্যা গায়ত্রী চার চার সংখ্যা দ্বারা পরিবৰ্দ্ধিত হইয়া তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ চতুর্থ পঙ্‌ক্তির দ্বিতীয় ঘরে প্রাজাপত্যা গায়ত্রীর সংখ্যা আছে ৮, সুতরাং ৪ দ্বারা পরিবৰ্দ্ধিত হইয়া তৃতীয় ঘরে বসিবে ১২, চতুর্থ ঘরে ১৬, পঞ্চম ঘরে ২০, ষষ্ঠ ঘরে ২৪, সপ্তম ঘরে ২৮ ও অষ্টম ঘরে বসিবে ৩২।

১২। যে সকল গায়ত্রী সম্বন্ধে বিশেষ কোন বিধান নাই, তাহার [ অর্থাৎ দৈবী ও যাজুষী ] এক এক সংখ্যা দ্বারা পরিবৰ্দ্ধিত হইয়া তৃতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত বসিবে—অর্থাৎ দ্বিতীয় পঙ্‌ক্তির দ্বিতীয় ঘরে দৈবী গায়ত্রীর সংখ্যা আছে ১, সুতরাং তৃতীয় ঘরে বসিবে ২, চতুর্থ ঘরে ৩, পঞ্চম ঘরে ৪, ষষ্ঠ ঘরে ৫, সপ্তম ঘরে ৬ ও অষ্টম ঘরে বসিবে ৭, এবং পঞ্চম পঙ্‌ক্তিতে দ্বিতীয় ঘরে যাজুষী গায়ত্রীর সংখ্যা আছে ৬, সুতরাং তৃতীয় ঘরে ৭, চতুর্থ ঘরে ৮, পঞ্চম ঘরে ৯, ষষ্ঠ ঘরে ১০, সপ্তম ঘরে ১১ ও অষ্টম ঘরে বসিবে ১২।

১৩। তৃতীয় পঙ্‌ক্তিতে আসুরী গায়ত্রী এক এক সংখ্যা পরিত্যাগপূর্ব্বক

**तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः ॥१४॥**

तानि छन्दांसि गायत्र्याः परस्तात् उष्णिगनुष्टुब्बृहतीपङ्क्ति-त्रिष्टुब्जगत्याख्यानि क्रमेण भवन्ति ॥

**तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्म्यः ॥ १५ ॥**

यजुषां पङ्क्तिमारभ्य तिस्रो याजुषी, साम्नी आर्ची चेति गायत्र्यो मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री भवति। सनाम्न्य इत्येकसंज्ञा इत्यर्थः। तिस्रस्तिस्र इति वीप्सया परेषा-मुष्णिगादीनामिह ग्रहणम्। तथा एकैकेति वीप्सया तास्व ब्राह्म्यो भवन्तीति विधीयते। ब्राह्म्य इति गायत्र्यादीनां जगतीपर्य्यन्तानां विशेषणम्। एवं याजुषी, साम्नी आर्ची चोष्णिक् मिलिता एका द्विचत्वारिंशदक्षरा ब्राह्मी उष्णिग्भवति। एवं तिस्रोऽनुष्टुभः सङ्गताः सत्योऽष्टचत्वारिंशदक्षरा एका ब्राह्म्यनुष्टुब् भवति। ता एव तिस्रो बृहत्यः सङ्गताः सत्यश्चतुःपञ्चाशदक्षरा एका ब्राह्मी बृहती

তৃতীয় পঙ্‌ক্তির দ্বিতীয় ঘর হইতে অষ্টম ঘর পর্য্যন্ত যথাক্রমে বসিবে। অর্থাৎ তৃতীয় পঙ্‌ক্তির দ্বিতীয় ঘরে আসুরী গায়ত্রীর সংখ্যা আছে ১৫, সুতরাং এক বাদ দিয়া তৃতীয় ঘরে বসিবে ১৪, চতুর্থ ঘরে ১৩, পঞ্চম ঘরে ১২, ষষ্ঠ ঘরে ১১, সপ্তম ঘরে ১০ ও অষ্টম ঘরে ৯।

১৪। গায়ত্রী ছন্দের পর অর্থাৎ দ্বিতীয় ঘর হইতে যথাক্রমে উষ্ণিক্, অনু-ষ্টুপ্, বৃহতী, পঙ্‌ক্তি, ত্রিষ্টুপ্, ও জগতী ছন্দ হইবে। অর্থাৎ দ্বিতীয়াদি ঘরের অঙ্কানুসারে যথাক্রমে গায়ত্রীর ন্যায় উষ্ণিক্ প্রভৃতি প্রকারভেদ বুঝিতে হইবে।

১৫। যাজুষী, সাম্নী, আর্চ্চী, গায়ত্রী একত্রিত হইয়া ৩৬ অক্ষরে এক ব্রাহ্মী গায়ত্রী হইবে; এবং যাজুষী, সাম্নী, আর্চ্চী ও উষ্ণিক্ একত্রিত হইয়া ৪২ অক্ষরে এক ব্রাহ্মী উষ্ণিক্ এবং যাজুষী, সাম্নী, ও আর্চ্চী অনুষ্টুভ্ একত্রিত হইয়া ৪৮ অক্ষরে এক ব্রাহ্মী অনুষ্টুভ্ এবং যাজুষী, সাম্নী ও আর্চ্চী বৃহতী একত্রিত হইয়া ৫৪ অক্ষরে এক ব্রাহ্মী বৃহতী এবং যাজুষী, সাম্নী ও আর্চ্চী পঙ্‌ক্তি একত্রিত হইয়া

ভবতি। তা এব তিস্রঃ পঙ্‌ক্তয়ঃ সঙ্কলিতাঃ ষষ্ট্যক্ষরা একা ব্রাহ্মী পঙ্‌ক্তির্ভবতি। তা এব তিস্রস্ত্রিষ্টুভঃ সঙ্কলিতাঃ ষট্‌ষষ্ট্যক্ষরা একা ব্রাহ্মী ত্রিষ্টুব্ ভবতি। তা এব তিস্রো জগত্যঃ সঙ্কলিতাঃ দ্বিসপ্তত্যক্ষরা একা ব্রাহ্মী জগতী ভবতি। অত্রাষ্টম্যাং পঙ্‌ক্তৌ প্রথমে কোষ্ঠে ব্রাহ্মীশব্দং ব্যবস্থাপ্য দ্বিতীয়াদিষু কোষ্ঠেষু ক্রমেণ ষট্‌ত্রিংশদাদ্যঙ্কান্ বিন্যসেৎ॥

## প্রাগ্‌যজুষামার্ষ্যং ইতি॥ ১৬॥

তিস্রস্তিস্র ইত্যনুবর্ত্ততে। যজুষাং পঙ্‌ক্তেঃ প্রাক্ প্রাজাপত্যা আসুরী দৈবীতি যাস্তিস্রো গায়ত্র্যস্তাঃ সঙ্কলিতাঃ চতুর্বিংশত্যক্ষরা একা আর্ষী গায়ত্রী ভবতি। তা এব তিস্র উষ্ণিহঃ সঙ্কলিতা অষ্টাবিংশত্যক্ষরা একা আর্ষী উষ্ণিগ্ ভবতি। তা এব তিস্রোঽনুষ্টুভঃ সঙ্কলিতাঃ দ্বাত্রিংশদক্ষরা একা আর্ষী অনুষ্টুব্ ভবতি। তা এব তিস্রো বৃহত্যঃ সঙ্কলিতাঃ ষট্‌ত্রিংশদক্ষরা একা আর্ষী বৃহতী ভবতি। তা এব

৬০ অক্ষরে এক ব্রাহ্মী পঙ্‌ক্তি এবং যাজুষী, সাম্নী, আর্চ্চী ও ত্রিষ্টুভ্ একত্রিত হইয়া ৬৬ অক্ষরে এক ব্রাহ্মী ত্রিষ্টুভ্ এবং যাজুষী সাম্নী আর্চ্চী জগতী একত্রিত হইয়া ৭২ অক্ষরে এক ব্রাহ্মী জগতী হইবে। সেই মণ্ডলের অষ্টম পঙ্‌ক্তিতে প্রথম ঘরে "ব্রাহ্মী" এই নাম লিখিয়া দ্বিতীয় ঘরে ৩৬, তৃতীয় ঘরে ৪২, চতুর্থ ঘরে ৪৮, পঞ্চম ঘরে ৫৪, ষষ্ঠ ঘরে ৬০, সপ্তম ঘরে ৬৬ অষ্টম ঘরে ৭২ অঙ্ক স্থাপন করিতে হইবে।

১৬। প্রাজাপত্যা, আসুরী ও দৈবী উষ্ণিক্ একত্রিত হইয়া ২৪ অক্ষরে এক আর্ষী গায়ত্রী হইবে; এবং প্রাজাপত্যা, আসুরী, দৈবী ও উষ্ণিক্ একত্রিত হইয়া ২৮ অক্ষরে এক আর্ষী উষ্ণিক্ এবং প্রাজাপত্যা, আসুরী ও দৈবী অনুষ্টুভ্ একত্রিত হইয়া ৩২ অক্ষরে এক আর্ষী অনুষ্টুভ্ এবং প্রাজাপত্যা আসুরী দৈবী ও বৃহতী একত্রিত হইয়া ৩৬ অক্ষরে এক আর্ষী বৃহতী, এবং প্রাজাপত্যা আসুরী দৈবী ও পঙ্‌ক্তি একত্রিত হইয়া ৪০ অক্ষরে এক আর্ষী পঙ্‌ক্তি এবং প্রাজাপত্যা দৈবী ও ত্রিষ্টুপ্ একত্রিত হইয়া ৪৪ অক্ষরে এক আর্ষী ত্রিষ্টুপ্ এবং প্রাজাপত্যা

तिस्रः पङ्क्तयः सङ्कलिताश्चत्वारिंशदक्षरा एका आर्षी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः सङ्कलिताश्चतुश्चत्वारिंशदक्षरा एका आर्षी त्रिष्टुब् भवति। ता एव तिस्रो जगत्यः सङ्कलिता अष्टचत्वारिंशदक्षरा एका आर्षी जगती भवति। तत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठे आर्षीशब्दं व्यवस्थाप्य द्वितीयादिषु कोष्ठेषु क्रमेण चतुर्विंशत्याद्यङ्कान् विन्यसेत्। प्रथमपङ्क्तेर्द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादीनि नामानि लिखेत्। अयं स्पष्टतरः प्रदर्शनोपायः * ॥

इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः ॥ २

আসুরী ও দৈবী জগতী একত্রিত হইয়া ৪৮ অক্ষরে এক আর্ষী জগতী হইবে। সেই মণ্ডলের প্রথম পংক্তিতে প্রথম কোষ্ঠে "আর্ষী" এই নাম লিখিয়া, দ্বিতীয় কোষ্ঠে ২৪, তৃতীয় কোষ্ঠে ২৮, চতুর্থ কোষ্ঠে ৩২, পঞ্চম কোষ্ঠে ৩৬, ষষ্ঠ কোষ্ঠে ৪০, সপ্তম কোষ্ঠে ৪৪, অষ্টম কোষ্ঠে ৩৮ অঙ্ক বসাইতে হইবে। এই সমস্ত সূত্রার্থ সঙ্কলনে যে মণ্ডলটি হইবে, সেই মণ্ডলটি উপরে দেখান হইয়াছে, ঐ মণ্ডলটিই গায়ত্রী প্রভৃতি ছন্দের প্রকারভেদ বুঝিবার একমাত্র প্রকৃষ্ট উপায়।

* गायत्र्यादिसप्तच्छन्दसाम् आर्ष्याद्यष्टसंज्ञाभिः षट्पञ्चाशद्भेदाः। तेषामुदाहरणानि वृत्तिकृता न दर्शितानि। अप्रचलितवेदशाखासु तेषां कासाञ्चन प्राप्तेर्दुर्घटत्वात् यथाप्राप्तं कानिचित् प्रदर्श्यन्ते। तत्रार्थस्तत्तत्प्रकरणे दर्शयितव्याः। दैवी गायत्री—ओं। दैवी उष्णिक्—भुवः। दैवी बृहती—भूर्भुवः स्वः। आसुरी गायत्री—आपो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः—स्वरोम्। प्राजापत्या गायत्री—अग्निर्ज्योतिर्ज्योतिरग्निः। साम्नी गायत्री—अग्निर्ज्योतिः सूर्यज्योतिः प्रजापतिर्ज्योतिः। साम्नी त्रिष्टुप्, ऋग्वेदे—महीराधो विश्वजन्यं दधाना भरद्वाजान् सार्ञ्जयो अभ्ययष्ट। ऋक्संहितायाम् अन्या साम्नी गायत्री—पुरुतमं पुरूणां स्तोतृणां विवाचि। आर्षी गायत्री अनुक्रमणिकाभाष्यधृता।—अग्नायी पत्नीवान् सजूर्देवेन त्वष्ट्रा सोमं पिब। आर्षी त्रिष्टुप् सामवेदे—अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तं दूरेदृशं गृहपतिमथव्युम्। ब्राह्मी त्रिष्टुप् मन्त्रब्राह्मणस्य प्रथमप्रपाठके।—परैतु मृत्युरमृतं न आगात् वैवस्वतो नो अभयं कृणोतु। परं मृत्योऽनु परेहि पन्थां यत्र नोऽन्य इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् स्वाहा। अवधेयम्—पिङ्गलाचार्यकृतगायत्र्यादिलक्षणैर्वैदिकमन्त्रा न लक्ष्या भवन्ति, प्रत्युतान्यैरपि विभिन्नच्छन्दोभिरुक्तास्ते वक्ष्यमाण-निचृद्-

| संख्या | गायत्री | |
|---|---|---|
| १ | दैवी | ० |
| २ | " | भूरिक् |
| ३ | " | स्वराट् |
| ४ | याजुषी | विराट् |
| ५ | " | निचृत् |
| ६ | " | ० |
| ७ | " | भूरिक् (१), प्राजापत्या निचृत् (२) |
| ८ | " | ० |
| ९ | " | भूरिक् |
| १० | " | स्वराट् (१) साम्नी विराट् (२) |
| ११ | साम्नी | निचृत् |
| १२ | " | ० |
| १३ | " | भूरिक् (१) आसुरी विराट् (२) |
| १४ | " | स्वराट् (१) आसुरी निचृत् (२) |
| १५ | आसुरी | ० |
| १६ | " | भूरिक् (१) आर्ची विराट् (२) |
| १७ | " | स्वराट् (१) आर्ची निचृत् (२) |

---

भूरिग्विराट्-स्वराड्रूपैः समाधेयाः। यथा स्वरित्यस्यैकाक्षरत्वेऽपि मानुष्टुप्छन्दसा सह विरोधः। एवञ्च वेदेषु ये मन्त्राः सन्ति तेषां कात्यायनादिभिरनुक्रमणिकाकारैर्मन्त्रादिभिश्च यानि च्छन्दांसि विहितानि तेषामेव स्थितेर्गतिश्चिन्तनीयेति न्यायात् यथाशास्त्रत्वप्रतिपादनार्थमेव भगवता पिङ्गलाचार्येणेदं छन्दःशास्त्रं प्रणीतम्, न तु तेषां बाधकार्थम्। तथाप्येकाक्षरादि-कमेव गायत्र्यादिसमच्छन्दसां शास्त्रविहितत्वं प्रदर्श्यते। उष्णिगादीनामप्यनया रीत्याऽक्षर-संख्योहनीया। एवमथर्ववेदोक्तमन्त्रेष्वपि छन्दःसमाधानमनया रीत्या वेदितव्यम्।

| अथवा | गायत्री | |
|---|---|---|
| १८ | आर्ची | ० |
| १९ | ,, | भूरिक् |
| २० | ,, | स्वराट् |
| २१ | पादनिचृत् | ० |
| २२ | आर्षी | विराट् |
| २३ | ,, | निचृत् |
| २४ | आर्षी | ० |
| २५ | ,, | भूरिक् |
| २६ | ,, | स्वराट् |
| ३४ | ब्राह्मी | विराट् |
| ३५ | ,, | निचृत् |
| ३६ | ,, | ० |
| ३७ | ,, | भूरिक् |
| ३८ | ,, | स्वराट् |



# तृतीयोऽध्यायः

## पादः ॥ १ ॥

अधिकारोऽयम् आ अध्यायपरिसमाप्तेः। यदित ऊर्द्ध्वमनु-क्रमिष्यामस्तत् 'पादः' इत्यधिकृतं वेदितव्यम्। वक्ष्यति च—'गायत्र्या वसवः' ( ३।३ ) इति ॥

## इयादिपूरणः ॥ २ ॥

पाद इत्यनुवर्त्तते। इयादिः पूरणो यस्य स इयादिपूरणः। आदिशब्देन उवादयो गृह्यन्ते (क)। तत्रायमर्थः—यत्र गायत्र्यादि-च्छन्दसि पादस्याक्षरसंख्या न पूर्य्यते, तत्र इयादिभिः पूरयितव्या। यथा—'तत् सवितुर्वरेणियम्' 'दिवं गच्छ सुवःपते' इत्यादयः ॥

## गायत्र्या वसवः ॥ ३ ॥

पाद इत्यनुवर्त्तते। परिभाषेयम्। गायत्र्याः पादो वसवोऽ-

১। এই অধ্যায়ের পরিসমাপ্তি পর্য্যন্ত "পাদ" এইটি অধিকৃত হইবে।

২। গায়ত্রী প্রভৃতি ছন্দের পাদে যে স্থলে অক্ষরসংখ্যা কম হইবে, সেই স্থলে ইয়্ উব্ প্রভৃতি দ্বারা পূরণ করিতে হইবে।—যেমন "তৎসবিতুর্ব্বরেণ্যম্" এই গায়ত্রীপাদে ৮ অক্ষরস্থলে ৭ অক্ষর হওয়ায় "তৎসবিতুর্ব্বরেণিয়ম্" এইরূপ পূরণ করিতে হইয়াছে। ইত্যাদি।

---

(क) उवादय इत्यादिशब्देन यण्संयोगसवर्णदीर्घगुणवृद्धिव्यूहा गृह्यन्ते। तथाच कात्यायनः।—"पादपूरणार्थन्तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत"। भाष्यम्—"क्षैप्रसंयोगो यकारवकारसंयोगः, यण्संयोग इत्यन्ये। कुत एतत् यण् हि क्षिप्रं भवतीति क्षैप्रः, अथ-मैत्यादावेकमात्रामध्यर्द्धमात्रां करोतीति। 'एकः पूर्व्वपरयोः' इत्यधिकारसम्पन्नसन्धिरेकाक्षरीभावः, तत्र द्वे अक्षरे एकाक्षरीक्रियत इति। यण्व्यूहो यथा—"त्वामिन्द्र वज्रिन्"त्यादौ वज्रिन्नि-त्यादि, गुणव्यूहो यथा—'उपप्रयन्तु सुपर्व्वणीम्' इत्यादि। वृद्धिव्यूहो यथा—'प्रजा—एतु सहनात्' इत्यादि। यण् इति पदेन यवरला गृह्यन्ते।

ष्टाक्षराणि भवन्ति। यत्र गायत्र्याः पादोऽभिधास्यते, तत्राष्टाक्षरो ज्ञेयः ॥

जगत्या आदित्याः ॥ ४ ॥

पाद इत्यनुवर्त्तते। परिभाषेयम्। जगत्याः पादो द्वादशाक्षराणि भवन्ति। यत्र क्वचिज्जागतः पादस्तत्र द्वादशाक्षरो गृह्यते ॥

विराजो दिशः ॥ ५ ॥

यत्र क्वचिद्वैराजः पाद इत्युच्यते तत्र दशाक्षरः प्रत्येतव्यः ॥

त्रिष्टुभो रुद्राः ॥ ६ ॥

त्रैष्टुभः पाद इत्युक्ते सर्व्वत्रैकादशाक्षरो गृह्यते। अस्मिन्नेवाध्याये परिभाषा एताश्चतस्रः ॥

एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तदुक्तपादम्। यस्य च्छन्दसो यादृशः पादः परिभाषितस्तच्छन्दस्तेनैव पादेन क्वचिदेकपात् क्वचिद्-द्विपात्, क्वचित्त्रिपात्, क्वचिच्चतुष्पाद् भवति। (क) गायत्री त्रिपदैव चतुर्भिरष्टाक्षरैः पादैरनुष्टुबेव स्यात् ॥

৩। যে যে স্থলে গায়ত্রীর পাদ কথিত হইবে, সেই সেই স্থলে অষ্টাক্ষর গ্রহণ করিতে হইবে।

৪। যে স্থলে জগতীর পাদ কথিত হইবে, সেই স্থলে দ্বাদশাক্ষর গ্রহণ করিতে হইবে।

৫। যে স্থলে বৈরাজপাদ কথিত হইবে, সেই স্থলে দশাক্ষর গ্রহণ করিতে হইবে।

৬। যে স্থলে ত্রিষ্টুভের পাদ কথিত হইবে, সেই স্থলে একাদশাক্ষর বুঝিতে হইবে। এই অধ্যায়ে ৩—৬ পর্য্যন্ত এই চারিটী পরিভাষাসূত্র।

৭। পূর্ব্বোক্ত পাদানুযায়ী ছন্দঃ—কোন স্থলে এক পাদ, কোন স্থলে দুই পাদ, কোন স্থলে তিন পাদ ও কোন স্থলে চারি পাদ হইবে। গায়ত্রীচ্ছন্দ ত্রিপাদ ভিন্ন হইবে না, কারণ অষ্টাক্ষর চারি পাদে অনুষ্টুপ্ ছন্দ হয়।

(क) वैदिकमात्रविषयकमिदम्, लौकिके तु पादचतुष्टयमिति विशेषो वक्ष्यते।

## आर्ष्यं चतुष्पाद्दृतुभिः ॥ ८ ॥

ऋतुशब्देन लक्षणया षडक्षरः पादोऽभिधीयते। तैः पादैश्चतुष्पादं गायत्रं छन्दो भवति। एवं चतुर्विंशत्यक्षराणि सम्पद्यन्ते॥ तत्रोदाहरणम्—ऋग्वेदे,—

इन्द्रः शचीपति (१) र्बलेन वीलितः। (२)
दुश्च्यवनो वृषा (३) समत्सु सासहिः॥ (४)

## क्वचित्त्रिपाद्दृषिभिः ॥ ९ ॥

क्वचिद्वेदे सप्ताक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति। एवमेकविंशत्यक्षराणि जायन्ते। तत्रोदाहरणम्—ऋग्वेदे,—

युवाकु हि शचीनां (१) युवाकु सुमतीनाम्। (२)
भूयाम वाजदाव्नाम्॥ (३)

## सा पादनिचृत् ॥ १० ॥

सैव गायत्री। पादनिचृदिति संज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदयसम्बन्धज्ञापनार्थमियं संज्ञा वेदस्यानादित्वान्मन्त्रत्वेऽपि न दुष्टेति॥

## षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ॥ ११ ॥

'त्रिपात्' इत्यनुवर्त्तते। प्रथमः पादः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः, एवं त्रिभिः पादैर्या गायत्री सा अतिपादनिचृदितिसंज्ञां लभते। तत्रोदाहरणं सामवेदे—

प्रेष्ठं वो अतिथिं। (१) स्तुषे मित्रमिव प्रियम्। (२) अग्ने रथं न वेद्यम् (३)॥

৮। ষড়ক্ষর চারিপাদে ২৪ অক্ষরে আর্ষী গায়ত্রী ছন্দ হয়। প্রত্যেক সূত্রের উদাহরণই বৃত্তিতে দ্রষ্টব্য।

৯। কোন বেদে সপ্তাক্ষর তিনপাদে—২১ অক্ষরেও গায়ত্রীচ্ছন্দ হয়।

১০। সেই সপ্তাক্ষর ত্রিপাদ গায়ত্রীকে "পাদনিচৃত্" বলে। প্রয়োগকর্ত্তার শুভাদৃষ্ট জানাইবার জন্যই এই সংজ্ঞা করা হইয়াছে।

১১। যে গায়ত্রীচ্ছন্দের প্রথম পাদে ছয় অক্ষর দ্বিতীয় পাদে আটাক্ষর ও তৃতীয়পাদে সপ্তাক্ষর হয়, সেই ত্রিপাদ গায়ত্রীকে "অতিপাদনিচৃৎ" বলে।

## द्वौ नवकौ षट्कश्च नागी ॥ १२ ॥

द्वौ नवाक्षरौ पादौ, तृतीयः षडक्षरः, एवं त्रिभिः पादैर्नागी नाम गायत्री भवति ॥ तत्रोदाहरणम् ऋग्वेदे—अग्ने तमद्याश्वं न स्तोमैः (१)। क्रतुं न भद्रं हृदि स्पृशम् (२)। ऋध्यामा त ओहैः (३)

## विपरीता वाराही ॥ १३ ॥

इयमेव नागी गायत्री विपरीता यदा भवति, तदा वाराही नाम भवति। प्रथमः पादः षडक्षरः, द्वितीयतृतीयौ नवाक्षरौ। तत्रोदाहरणं सामवेदे—अग्ने मृडमहाम् (१)। असि यदमादेव युञ्जन (२)। इयेथ बर्हिरासदम् ॥ (३)

## षट्कसप्तकाष्टकैर्वर्द्धमाना ॥ १४ ॥

षडक्षरः प्रथमः पादः, सप्ताक्षरो द्वितीयः, अष्टाक्षरस्तृतीयः एवं त्रिभिः पादैर्वर्द्धमाना नाम गायत्री भवति ॥ यथा सामवेदे—त्वमग्ने यज्ञानां (१)। होता विश्वेषां हितः (२)। देवेभिर्मानुषे जने ॥ (३)

## विपरीता प्रतिष्ठा ॥ १५ ॥

सैव वर्द्धमाना गायत्री यदा विपरीता स्यात्तदा प्रतिष्ठा नाम गायत्री भवति ॥ अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयः षडक्षरः। यथा ऋग्वेदे—

১২। যে গায়ত্রীছন্দের প্রথম দুই পাদে নয় অক্ষর ও তৃতীয় পাদে ছয় অক্ষর, সেই ত্রিপাদ গায়ত্রীকে "নাগী" বলে।

১৩। যে গায়ত্রীছন্দের প্রথম পাদে ছয় অক্ষর এবং দ্বিতীয় ও তৃতীয় পাদে নয় অক্ষর, সেই গায়ত্রীকে "বারাহী" বলে।

১৪। যে ছন্দের প্রথম পাদে ছয় অক্ষর, দ্বিতীয় পাদে সাত অক্ষর ও তৃতীয় পাদে আট অক্ষর, সেই ছন্দকে "বর্দ্ধমানা গায়ত্রী" বলে।

आपः पृणीत भेषजं ( १ )। वरूथं तन्वे मम ( २ )।
ज्योक् च सूर्य्यं दृशे ( ३ )॥

**तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥ १६ ॥**

तृतीयशब्देनैतदध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह। तथा-चोक्तम्,—'विराजो दिशः ( ३।५ )' इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पादः स्यात्, ततस्ताभ्यां द्विपाद् विराड् नाम गायत्री भवति॥ यथा
नृभिर्येमानो हर्य्यतो विचक्षणो ( १ )
राजादेवः समुद्रियः ( २ )॥

**त्रिपात्त्रैष्टुभैः ॥ १७ ॥**

एकादशाक्षरैः पादैस्त्रिपाद्विराड् नाम गायत्री भवति। तृतीय-मित्यनुवर्त्तनीयम्। यथा मन्त्रब्राह्मणे—पूर्णहोमं यशसे जुहोमि यो ( १ ) ऽस्मै जुहोति वरमस्मै ददाति ( २ )। वरं वृणे यशसा भामि लोके (३) इति॥ ऋग्वेदे च—दुहीयन्मित्रधितये युवाकु (१)। राये च नो मिमीतं वाजवत्यै ( २ )। इषे च नो मिमीतं धेनुमत्यै ( ३ )॥

इति गायत्र्यधिकारः। (क)

১৫। যে ছন্দের প্রথমে আট অক্ষর দ্বিতীয় পাদে সাত অক্ষর ও তৃতীয় পাদে ছয় অক্ষর, সেই ছন্দকে "প্রতিষ্ঠা গায়ত্রী" বলে।

১৬। জগতীচ্ছন্দের একপাদ ( দ্বাদশাক্ষর ) এবং গায়ত্রীচ্ছন্দের এক পাদ ( অষ্টাক্ষর ) দ্বারা 'দ্বিপাদ্ বিরাট্' নামক গায়ত্রীচ্ছন্দ হয়।

১৭। ত্রিষ্টুপ্ছন্দের তিন পাদকে ( অর্থাৎ একাদশাক্ষর তিন পাদকে ) "ত্রিপাদ্ বিরাট্ গায়ত্রী" ছন্দ বলে।

( এই স্থানে গায়ত্রী অধিকার সমাপ্ত হইল )।

(क) गातारं त्रायते इति गायत्रीति निरुच्यते। कात्यायनोक्तो विशेषो यथा—प्रथमं छन्द-स्त्रिपदा गायत्री (१) पञ्चकाश्चत्वारः (२) षट्कश्चैकः (३) चतुर्थश्चतुष्को वा पदपङ्क्तिः (४) षट

## उष्णिग्गायत्रौ जागतश्च ॥ १८ ॥

अत्र गायत्रावष्टाक्षरौ पादौ जागतश्च द्वादशाक्षर:, एवं त्रिभि: पादैरुष्णिङ् नाम च्छन्दो भवति। अत्र च क्रमो न विवक्षित:, पादसंख्यामात्रं विधीयते ॥

## ककुम्मध्ये चेदन्त्य: ॥ १९ ॥

गायत्रयो: पादयोर्मध्ये जागतश्चेत् पादो भवति, तदा सा उष्णिक् 'ककुप्' संज्ञां लभते। यथा ऋग्वेदे—"सुदेव: समहासति (१) सुवीरो नरो मरुत: स मर्त्य: (२)। यं त्रायध्वे स्याम ते" (३)*

## पुर उष्णिक् परत: ॥ २० ॥

पुरतश्चेज्जागत: पाद: स्यात्, गायत्रौ च परत:, तदा 'पुर उष्णिक्' नाम भवति। यथा ऋग्वेदे—"अप्स्वन्तरमृतमप्सु भेषज-(१) मपामुत प्रशस्तये (२)। देवा भवत वाजिन:" (३) ॥

১৮। যে ছন্দের দুই পাদ অষ্টাক্ষর এবং একপাদ দ্বাদশাক্ষর, সেই ত্রিপাদ ছন্দকে "উষ্ণিক্" বলে। এ স্থলে অষ্টাক্ষর এবং দ্বাদশাক্ষর পাদের অগ্র পশ্চাৎ কোনও ক্রমের বিবক্ষা নাই কেবল পাদসংখ্যা বিধান মাত্র।

১৯। যে ছন্দের প্রথম ও অন্ত্য পাদ অষ্টাক্ষর এবং মধ্যপাদ দ্বাদশাক্ষর, এরূপ উষ্ণিকের 'ককুভ্' সংজ্ঞা হয়।

২০। যে ছন্দের প্রথম পাদ দ্বাদশাক্ষর এবং শেষ দুই পাদ অষ্টাক্ষর, সেই ছন্দকে "পুর উষ্ণিক্" ছন্দ বলে।

सप्तैकादश उष्णिग्गर्भा। ५ त्रय: सप्तका: पादनिचृत्। ६। मध्यम: षट्कश्चेदतिनिचृत्। ७। दशकश्चेद् यवमध्या। ८। यस्यास्तु षट्सप्तकाष्टका: सा वर्द्धमाना। ९। विपरीता प्रतिष्ठा। १०। द्वौ षट्कौ सप्तकश्च ऋचीषमी। ११। षट्येकादशविधा गायत्री। तत्र त्रिप्रकारा: पादपङ्क्तय: पङ्क्तिच्छन्दसि सूत्रकारैव निर्दिष्टता:।

* मर्त्यीय इतीयशब्देन 'मस्य भासत' इति दीर्घव्यूहाश्च पादपूरणम्।

## परोष्णिक् परतः ॥ २१ ॥

जागतः पादः परतश्चेद् भवति, पूर्व्वौ च गायत्रौ, तदा 'परोष्णिक्' नाम भवति। "उष्णिग्गायत्रौ जागतश्च" (३।१८) इत्यनेन गतार्थमेतत्, विशेषसंज्ञाविधानार्थं पुनरुच्यते। प्रथमसूत्रे उष्णिग्ग्रहणमधिकारार्थम्। यथा ऋग्वेदे—"अग्ने वाजस्य गोमत (१) ईशानः सहसो यहो (२)। अस्मे धेहि जातवेदो महि श्रवः" (३) ॥

## चतुष्पादृषिभिः ॥ २२ ॥

सप्ताक्षरैश्चतुर्भिः पादैरुष्णिगेव भवति। यथा ऋग्वेदे—"नदं व ऽओदतीनां (१) नदं वो युवतीनाम् (२)। पतिं वो अघ्न्यानां (३) धेनूनामिषुध्यसि" (४) ॥

इत्युष्णिगधिकारः ॥ (क)

## अनुष्टुब् गायत्रैः ॥ २३ ॥

चतुष्पादित्यनुवर्त्तते। गायत्रैरष्टाक्षरैः पादैश्चतुष्पाच्छन्दः 'अनुष्टुप्'संज्ञं भवति। यथा यजुर्वेदे—"सहस्रशीर्षा पुरुषः (१)। सहस्राक्षः सहस्रपात् (२)। स भूमिं सर्वतः स्पृत्वा (३)। अत्यतिष्ठद्दशाङ्गुलम् ॥" (४)

২১। যে ছন্দের শেষপাদ দ্বাদশাক্ষর এবং প্রথম দুইপাদ অষ্টাক্ষর, সেই ছন্দকে "পরোষ্ণিক্" বলে।

২২। সপ্তাক্ষর চারিপাদকেও 'উষ্ণিক্' ছন্দ বলে।

( উষ্ণিক্ অধিকার সমাপ্ত )।

২৩। অষ্টাক্ষর চতুষ্পাদ ছন্দের "অনুষ্টুভ্" সংজ্ঞা হয়।

---

(क) कात्यायनोक्ता यथा—द्वितीयमुष्णिक् त्रिपदा। आद्यौ द्वादशश्चेत् पुर उष्णिक्। १। मध्यमश्चेत् ककुप्। २। त्रैष्टुभजागतचतुष्पात्ककुष्णिहाः। ३। एकादशिनः परः षट्क-सप्तमध्या। ४। आद्यः पञ्चकस्त्रयोऽष्टका इत्यनुष्टुब्गर्भाः। ५। मध्यमश्चेत् पिपीलिकामध्या। ६। चतुःसप्तक उष्णिगेव। ७। इति सप्त उष्णिहः। अत्र चतुर्द्वारत्वादूर्ध्वं त्रियत इत्युष्णिगिति निरुक्तम्।

## त्रिपात् क्वचिज्जागताभ्याञ्च ॥ २४ ॥

अनुष्टुबित्यनुवर्त्तते। चकाराद् गायत्रग्रहणञ्च। गायत्रेणैकेन पादेन ततो द्वाभ्यां जागताभ्यां क्वचित् त्रिपादनुष्टुब् भवति ॥

## मध्येऽन्त्ये च ॥ २५ ॥

जागतयोः पादयोर्मध्ये अन्त्ये च यदा गायत्रः पादो भवति, तदाप्यनुष्टुबेव स्यात्। मध्यपक्षे उदाहरणम् ऋग्वेदे—"पर्य्यू षु प्रधन्व वाजसातये (१) परि वृत्राणि सक्षणिः (२)। द्विषस्तरध्या ऋणया न ईयसे ॥" (३) अन्त्यपक्षे उदाहरणं तत्रैव—"मा कस्मै धातमभ्यमित्रिणे नो (१) मा कुत्रा नो गृहेभ्यो धेनवो गुः (२) स्तनाभुजोऽशिश्वीः (३) ॥"

इत्यनुष्टुबधिकारः। (क)

---

২৪। অষ্টাক্ষর একপাদ এবং দ্বাদশাক্ষর দুইপাদ, এই তিন পাদেও স্থল-বিশেষে "অনুষ্টুভ্" হইয়া থাকে।

২৫। যে ছন্দের প্রথম এবং শেষ পাদ দ্বাদশাক্ষর এবং মধ্যপাদ অষ্টাক্ষর, অথবা প্রথম দুইপাদ দ্বাদশাক্ষর ও শেষপাদ অষ্টাক্ষর, সেইরূপ দ্বিবিধ ছন্দকেও "অনুষ্টুভ্" বলিয়া থাকে।

(क) कात्यायनोक्ता यथा—तृतीयमनुष्टुप्। चत्वारोऽष्टकाः। १। पञ्च पञ्चकाः षट्कर्णको महापदपङ्क्तिः। २। जागतावष्टकश्च कृतिः। ३। मध्ये वैदष्टकः पिपीलिकामध्या। ४। नवकयोर्मध्ये जागतः काविराट्। ५। नवकैराजश्चयोदशैर्नष्टरूपी। ६। दशकास्त्रयो विराट्। ७। एकादशको वा। ८। इत्यष्टावनुष्टुभः। अनुष्टुबनुष्टोभनात्, 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टुभ्' इति निरुक्तम् ॥

## बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

यदा एको जागतः पादः, त्रयश्च गायत्राः तदा 'बृहती' नाम छन्दो भवति ॥ (क)

## पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥

'बृहती'त्यनुवर्त्तते। पूर्व्वः पादो जागतो यदि तृतीयो भवति, अन्ये च गायत्राः, तदासौ बृहती 'पथ्या' नाम भवति। यथा सामवेदे —"माचिदन्यद्वि' शंसत (१) सखायो मारिषण्यत (२)। इन्द्रमित् स्तोता वृषणं स चासु ते (३) मुहुरुक्था च शंसत" (४)॥

## न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

पूर्व्वश्चेदित्यनुवर्त्तते। पूर्व्वश्चेज्जागतः पादो द्वितीयो भवति, शेषाश्च गायत्राः तदा 'न्यङ्कुसारिणी' नाम्नी बृहती भवति। यथा ऋग्वेदे—"मत्स्यपायिते महः (१) पात्रस्येव हरिवो मत्सरोमदः (२)। वृषा ते वृष्णाइन्दु—(३) र्वाजिसहस्रमातमः (४)॥"

## स्कन्धोग्रीवी क्रौष्टुकेः ॥ २९ ॥

इयमेव न्यङ्कुसारिणी क्रौष्टुकेराचार्य्यस्य मतेन 'स्कन्धोग्रीवी' नाम छन्दो भवति। आचार्य्यग्रहणं पूजार्थम् ॥

২৬। যে ছন্দের একপাদ দ্বাদশাক্ষর এবং তিন পাদ অষ্টাক্ষর, সেই ছন্দকে 'বৃহতী' বলে।

২৭। যে ছন্দের তৃতীয় পাদ দ্বাদশাক্ষর এবং অন্য তিন পাদ অষ্টাক্ষর, সেইরূপ বৃহতীর 'পথ্যা' সংজ্ঞা হয়।

২৮। যে ছন্দের দ্বিতীয় পাদ দ্বাদশাক্ষর এবং অন্য তিন পাদ অষ্টাক্ষর, সেই ছন্দকে "ন্যঙ্কুসারিণী" নামক বৃহতী বলে।

২৯। আচার্য্য ক্রোষ্টুকি এই ন্যঙ্কুসারিণী বৃহতীকেই 'স্কন্ধোগ্রীবী' নামক ছন্দ বলিয়াছেন।

(क) जागतगायत्रशब्दाभ्यामत्र सर्व्वत्र द्वादशाष्टाक्षरयोर्ग्रहणं बोध्यम्।

## उरोबृहती यास्कस्य ॥ ३० ॥

इयमेव न्यङ्कुसारिणी यास्कस्याचार्य्यस्य मतेन 'उरोबृहती' नाम भवति ॥

## उपरिष्टाद्बृहत्यन्ते ॥ ३१ ॥

यदा जागतः पादोऽन्ते भवति, शेषाश्च गायत्राः, तदा 'उपरिष्टाद्बृहती' नाम भवति। यथा सामवेदे—"अग्ने जरितर्विश्पति (१) स्तपानो देवरक्षसः (२)। अप्रोषिवान् गृहपते (३) महाँ असि-दिवस्पायुर्दुरोणयुः (४)॥

## पुरस्ताद्बृहती पुरः ॥ ३२ ॥

स एव जागतः पादः पूर्व्वश्चेद् भवति शेषाश्च गायत्राः, तदा 'पुरस्ताद्बृहती' नाम भवति। यथा ऋग्वेदे—"महोयस्पतिः शवसोऽअसाम्या (१) महो नृम्णस्य तूतुजिः (२)। भर्त्ता वज्रस्य धृष्णोः (३) पिता पुत्रमिव प्रियम्" (४)॥ 'बृहतीजागतः त्रयश्च गायत्राः' (३।२२) इत्यनेनैव गतार्थत्वात् संज्ञाविशेषप्रदर्शनार्थमिदं पुनरुच्यते ॥

## क्वचिन्नवकाश्चत्वारः ॥ ३३ ॥

क्वचिद्वेदे नवाक्षराश्चत्वारः पादा दृश्यन्ते, सापि बृहत्येव। यथा

৩০। যাস্ক আচার্য্য এই ন্যঙ্কুসারিণীকেই "উরোবৃহতী" বলিয়াছেন।

৩১। যে ছন্দের শেষপাদ দ্বাদশাক্ষর এবং অন্য তিনপাদ অষ্টাক্ষর, সেই ছন্দকে 'উপরিষ্টাৎ বৃহতী" বলে।

৩২। যে ছন্দের প্রথম পাদ দ্বাদশাক্ষর এবং শেষ তিন পাদ অষ্টাক্ষর, তাহাকে "পুরস্তাৎ বৃহতী" বলে।

৩৩। বেদে স্থলবিশেষে নবাক্ষরবিশিষ্ট চারি পাদও থাকে। ঐরূপ স্থলেও বৃহতী ছন্দই হয়।

ऋग्वेदे—'तं त्वा वयं पितो वचोभिः (१) गावो न हव्या सुषू-दिमः (२)। देवेभ्यस्त्वा सधमाद (३) मस्मभ्यं त्वा सधमादम् (४)॥" (क)

## वैराजौ गायत्रौ च ॥ ३४ ॥

यत्र वैराजौ पादौ पूर्वौ दशाक्षरौ भवतः ततो गायत्रौ, सापि 'बृहती'। यथा सामवेदे—'अग्ने विवस्वदुषसश्चित्रं (१) राधो अमर्त्य आदाशुषे (२)। जातवेदा वहत्व (३) मद्यादेवाँ उषर्बुधः (४)॥" (ख)

## त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

त्रिभिर्जागतैः पादैश्छन्दो 'महाबृहती' नाम भवति। यथा ऋग्वेदे—"अजीजनोऽमृतमर्त्येष्वां (१) ऋतस्य धर्म्मन्नमृतस्य चारुण.। (२) सदा सरो वाजमच्छास निष्यदत्॥" २ (ग)

## सतोबृहती ताण्डिनः ॥ ३६ ॥

इयमेव महाबृहती ताण्डिन आचार्य्यस्य मतेन सतोबृहती नाम भवति।

इति बृहत्यधिकारः॥

৩৪। প্রথম দুইপাদ দশাক্ষর এবং পরের দুইপাদ অষ্টাক্ষর হইলে তাহাকেও "বৃহতী" বলে।

৩৫। দ্বাদশাক্ষর তিনপাদকে "মহাবৃহতী" ছন্দ বলে।

৩৬। তাণ্ডী নামক মুনি এই বৃহতীকেই "সতোবৃহতী" বলিয়াছেন।

---

(क) 'हविया' 'देवेभिय' इति पूरणात् पादपूरणम्।

(ख) 'अमर्त्तिय' 'वहतुव' इति पूरणात् पादपूरणम्।

(ग) नियत्वादेकाक्षरन्यूनत्वं व्यूहनाच्च पादपूरणम्।

## पङ्क्तिर्जागतौ गायत्रौ ॥ ३७ ॥

यदा द्वौ पादौ जागतौ भवतः तथा गायत्रौ च, तदा 'पङ्क्ति'र्नाम च्छन्दो भवति ॥

## पूर्वौ चेदयुजौ सतःपङ्क्तिः ॥ ३८ ॥

यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागता-वित्यर्थः, द्वितीयचतुर्थौ च गायत्रौ तच्छन्दः 'सतःपङ्क्ति'र्नाम भवति। यथा ऋग्वेदे—"यं त्वा देवासोमनवेदधुरिह (१) यजिष्ठं हव्यवाहन (२)। यं कण्वो मेध्यातिथिर्धनस्पृतं (३) यं वृषायमुपस्तुतः" (४)॥

## विपरीतौ च ॥ ३९ ॥

यदा तावेव पादौ विपरीतौ भवतः, तदापि 'सतःपङ्क्ति'रेव। अयमर्थः—प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ च जागतौ, तदापि 'सतःपङ्क्ति'रेव भवति। यथा ऋग्वेदे—"य ऋष्वः श्रावयत् सखा (१) विश्वेत् स वेद जनिमा पुरुष्टुतः (२)। तं विश्वे मानुषा युगे (३) इन्द्रं हवन्ते तविषं यतः स्रुचः" (४)॥

## आस्तारपङ्क्तिः परतः ॥ ४० ॥

यदा जागतौ पादौ परौ भवतः गायत्रौ च पूर्व्वौ, तदा 'आस्तार-पङ्क्ति'र्नाम। यथा ऋग्वेदे—"भद्रं नो अपि वातय (१) मनो दक्षमुत क्रतुम् (२)। अधा ते सख्ये अन्धसो विवो मदे (३) रणन् गावो न यवसे विवक्षसे (४)॥"

৩৭। যে ছন্দের দুইপাদ দ্বাদশাক্ষর এবং দুইপাদ অষ্টাক্ষর, সেই ছন্দকে 'পঙ্‌ক্তি' বলে।

৩৮। প্রথম ও তৃতীয়পাদ দ্বাদশাক্ষর এবং দ্বিতীয় ও চতুর্থপাদ অষ্টাক্ষর, এইরূপ ছন্দকে "সতঃপংক্তি" বলে।

৩৯। যে ছন্দের প্রথম ও তৃতীয় পাদ অষ্টাক্ষর এবং দ্বিতীয় ও চতুর্থ পাদ দ্বাদশাক্ষর, সেই ছন্দকেও "সতঃপংক্তি" বলে।

৪০। যে ছন্দের প্রথম দুইপাদ অষ্টাক্ষর এবং শেষ দুই পাদ দ্বাদশাক্ষর, সেই ছন্দকে "আস্তারপঙ্‌ক্তি" বলে।

## प्रस्तारपङ्क्तिः पुरतः ॥ ४१ ॥

यदा जागतौ पादौ पूर्व्वौं भवतः, गायत्रौ च परतः, तदा 'प्रस्तार-पङ्क्ति'र्नाम। 'पङ्क्तिर्जागतौ गायत्रौ च' (३।३७) इत्यनेन गतार्थ-मिदं, संज्ञाविशेषज्ञापनार्थं पुनरुच्यते। यथा मन्त्रब्राह्मणे—"काम वेदते मदो नामासि (१) समानया अमुं सुरा ते अभवत् (२)। परमत्र जन्मा अग्ने (३) तपसा निर्म्मितोऽसि (४) ॥" (क)

## विस्तारपङ्क्तिरन्तः ॥ ४२ ॥

यदा जागतौ पादौ मध्ये भवतः आद्यन्तयोश्च गायत्रौ, तदा 'विस्तारपङ्क्ति'र्नाम। यथा ऋग्वेदे—"अग्ने तव श्रवो वयो (१) महि भ्राजन्ते अर्च्चयो विभावसो (२)। बृहद्भानो शवसा वाज-मुक्थ्यम् (३) दधासि दाशुषे कवे (४) ॥"

## संस्तारपङ्क्तिर्बहिः ॥ ४३ ॥

यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा 'संस्तारपङ्क्ति'र्नाम च्छन्दः। यथा ऋग्वेदे—"पितुभृतो न तन्तुमित् सुदानवः (१) प्रति दध्मो यजामसि (२)। उषा अप स्वसुस्तम (३) संवर्त्तयति वर्त्तनिं सुजातता (४) ॥"

৪১। যে ছন্দের প্রথম দুইপাদ দ্বাদশাক্ষর ও পরের দুইপাদ অষ্টাক্ষর, সেই ছন্দকে "প্রস্তারপঙ্‌ক্তি" বলে।

৪২। যে ছন্দের প্রথম ও চতুর্থ পাদ অষ্টাক্ষর এবং দ্বিতীয় ও তৃতীয় পাদ দ্বাদশাক্ষর, সেই ছন্দকে "বিস্তারপঙ্‌ক্তি" বলে।

৪৩। যে ছন্দের প্রথম ও চতুর্থ পাদ দ্বাদশাক্ষর, এবং দ্বিতীয় ও তৃতীয় পাদ অষ্টাক্ষর, সেই ছন্দকে "সংস্তারপঙ্‌ক্তি" বলে।

---

(क) 'नामा असि' 'निर्म्मितः असि' इति सन्धिवृत्त्यात् पादपूर्त्तिः कात्यायनाचार्य्यैरिदं छन्दो गायत्रीच्छन्दोमध्ये परिगणितं, सायणाचार्य्यैश्च तु 'द्विपदा' इत्युक्तम्।

## अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ॥ ४४ ॥

पञ्चाक्षरैश्चतुर्भिः पादैः 'अक्षरपङ्क्ति'र्नाम च्छन्दः। ननु चत्वारिंशदक्षरा पङ्क्तिश्छन्दः, तत् कथं पञ्चकाश्चत्वार इत्युच्यते? अत्रोत्तरम् —"द्वावप्यल्पशः" (३।४५) इत्यस्मात् सिंहावलोकितन्यायेनाल्पशग्रहणमनुवर्त्तते, तेन पङ्क्तेरल्पत्वं विशेषात् प्रतिपादितं भवति। यथा ऋग्वेदे—"प्रशुक्रैतु (१) देवी मनीषा (२)। अस्मत्सुतष्टो (३) रथो न वाजी (४)॥"

## द्वावप्यल्पशः ॥ ४५ ॥

पञ्चग्रहणमनुवर्त्तते। पञ्चाक्षराभ्यां पादाभ्या-'मल्पशःपङ्क्ति'र्नाम च्छन्दो भवति, क्वचिदेव वेदे, न सर्व्वत्र ॥

## पदपङ्क्तिः पञ्च ॥ ४६ ॥

पञ्चका इत्यनुवर्त्तते। यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा 'पदपङ्क्ति'र्नाम च्छन्दः। यथा ऋग्वेदे—"घृतं न पूतं (१) तनूररेपाः (२) शुचि हिरण्यम् (३) तत्ते रुक्मो न (४) रोचत स्वधावः" (५)(क) ॥

## चतुष्कषट्कौ त्रयश्च ॥ ४७ ॥

चकारः पञ्चका इत्यनुकर्षणार्थः। यदा प्रथमश्चतुरक्षरः पादः, द्वितीयः षडक्षरः, ततस्त्रयः पञ्चाक्षराः तदा पञ्चपदा 'पदपङ्क्ति'रेव ॥

৪৪। পঞ্চাক্ষর চারিপাদ ছন্দকে 'অক্ষরপঙ্‌ক্তি' বলে।

৪৫। প্রতিপাদে পাঁচ পাঁচ অক্ষর, এইরূপ দুইপাদে "অল্পশঃপঙ্‌ক্তি" নামক ছন্দ হয়। বেদের কোন কোন স্থলে এই ছন্দের ব্যবহার দেখা যায়।

৪৬। পঞ্চাক্ষর পাঁচ পাদে "পদপঙ্‌ক্তি" ছন্দ হয়।

৪৭। যে ছন্দের প্রথমপাদে চারি অক্ষর, দ্বিতীয় পাদে ছয় অক্ষর ও পরের তিন পাদে পাঁচ পাঁচ অক্ষর, সেই ছন্দও পঞ্চপদ "পদপঙ্‌ক্তি বলিয়া কথিত হয়।

यथा ऋग्वेदे—"अधाह्यग्ने (१) क्रतोर्भद्रस्य (२) दक्षस्य साधोः (३) रथीर्ऋतस्य (४) बृहतो बभूथ" (५) ॥

## पथ्या पञ्चभिर्गायत्रैः ॥ ४८ ॥

पञ्चभिरष्टाक्षरैः पादैः 'पथ्या' नाम पङ्क्तिर्भवति । यथा ऋग्वेदे —"अक्षन्नमीमदन्तह्यि (१) अवप्रिया अधूषत (२) अस्तोषत स्वभानवो (३) विप्रानविष्ठया मती (४) योजान्विन्द्र ते हरी" (५) ॥

## जगती षड्भिः ॥ ४९ ॥

गायत्रैरित्यनुवर्त्तते । गायत्रैः षड्भिः पादैः 'जगती' नाम पङ्क्ति-च्छन्दो भवति । यथा मन्त्रब्राह्मणे—"येन स्त्रियमकृणुतं (१) येनापा-मृषतं सुराम् (२) येनाक्षमभ्यषिञ्चतं (३) येनेमां पृथिवीं महीं (४) यद्वां तदश्विना यश-(५) स्तेन मामभिषिञ्चतम् (६) ॥"

इति पङ्क्त्यधिकारः ॥

---

## एकेन त्रिष्टुब्ज्योतिष्मती ॥ ५० ॥

त्रिष्टुभः प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्या एव सम्बन्धः । एकेन त्रैष्टुभेन पादेनाधिकाराच्चतुर्भिर्गायत्रैः पञ्चपात् 'त्रिष्टुब्ज्योतिष्मती' नाम छन्दो भवति । त्रैष्टुभेन सह पञ्चभिर्गायत्रैरित्युक्ते चत्वार एव गायत्र्याः पादा लभ्यन्ते । यथा उपाध्यायेन सह पञ्च शिष्या आगता इत्युक्ते उपाध्यायपञ्चमाः प्रतीयन्ते ॥

৪৮। প্রতিপাদে আট অক্ষর, এইরূপ পাঁচপাদে 'পথ্যা' নামক পঙ্‌ক্তি ছন্দ হয়।

৪৯। অষ্টাক্ষর ছয়পাদে 'জগতী' নামক পঙ্‌ক্তি ছন্দ হয়।

৫০। এগার অক্ষর একপাদ ও আট অক্ষর চারিপাদ, এইরূপ পাঁচপাদে "জ্যোতিষ্মতী" ত্রিষ্টুপ্‌ছন্দ হয়।

## तथा जगती ॥ ५१ ॥

एकेन जागतेन पादेन, चतुर्भिर्गायत्रैः, पञ्चपाज्जगती 'ज्योतिष्मती' नाम छन्दो भवति ॥

## पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

प्रथमेन त्रैष्टुभेन पादेन शेषैश्च गायत्रैः पादैः 'पुरस्ताज्ज्योति'र्नाम त्रिष्टुब् भवति। यथा ऋग्वेदे—"तमुष्टुहीन्द्रं यो ह सत्वा यः शूरो (१) मघवा यो रथेष्ठाः (२)। प्रतीचश्चिद्योऽधीयान् (३) वृषण्वान् ववव्रुषः (४) चित्तमसो विहन्ता (५) ॥" पूर्वेणैव गतार्थत्वाद् विशेषसंज्ञाज्ञापनार्थमिदम्। तथा 'जगती'त्यनुवर्त्तनीयम्। तेनाद्येन जागतेन पादेन चतुर्भिश्च गायत्रैः पादैः 'पुरस्ताज्ज्योतिष्मती' नाम जगती भवति। यथा ऋग्वेदे—"अबोध्यग्निज्म उदेति सूर्य्यो व्युषा—(१) श्चन्द्रा मह्या वो अर्चिषा (२)। आयुक्षातामश्विनाया (३) तवे रथं प्रासावीद्देवः (४) सविता जगत् पृथक् (५) ॥"

## मध्येज्योतिः मध्यमेन ॥ ५३ ॥

यदा मध्यमस्त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा 'मध्येज्योति'र्नाम त्रिष्टुब् भवति। मध्येज्योतिरित्यलुक्समासः। यथा मन्त्रब्राह्मणे—इमन्तमुपस्थं (१) मधुना संसृजामि (२) प्राजापतेर्मुखमेतद्द्वितीयम् (३) तेन पुंसोऽभिभवासि (४) सर्व्वान् कामान्

৫১। বার অক্ষর একপাদ ও আট অক্ষর চারিপাদ, এইরূপ পাঁচ পাদে 'জ্যোতিষ্মতী" জগতীচ্ছন্দ হইয়া থাকে।

৫২। যে ছন্দের প্রথম পাদে একাদশাক্ষর ও শেষ চারিপাদে অষ্টাক্ষর, তাহাকে "পুরস্তাজ্জ্যোতি" নামক ত্রিষ্টুপ্ কহে এবং যাহার প্রথমপাদে বার অক্ষর ও শেষ চারিপাদে আট অক্ষর, তাহাকে "পুরস্তাজ্জ্যোতি" নামক জগতী ছন্দ বলে।

৫৩। যাহার পূর্ব্ব দুইপাদ ও পর দুইপাদ অষ্টাক্ষর এবং মধ্যের পাদ এগার

वयिष्यसि राज्ञी (५) (क) ॥" तथा 'जगती'त्यनुवर्त्तनीयम्। तेन यदा मध्यमो जागतः पादः, उभयतश्च द्वौ द्वौ गायत्रौ, तदा 'मध्येज्योति'-र्नाम जगती भवति। यथा ऋग्वेदे—बृहद्भिरग्ने अर्चिभिः (१) शुक्रेण देव शोचिषा (२)। भरद्वाजे समिधानो यविष्ठ्य (३) रेवन्नः शुक्र दीदिहि (४) द्युमत्पावक दीदिहि (५) ॥" (ख)

## उपरिष्टाज्ज्योतिरन्तेन ॥ ५४ ॥

यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभः, तदा 'उपरिष्टाज्ज्योति'र्नाम त्रिष्टुब् भवति। यथा मन्त्रब्राह्मणे—"अग्निं क्रव्यादमकृण्वन् (१) गुहानाः स्त्रीणामुपस्थम् (२) ऋषयः पुराणाः (३) तेन आज्यमकृण्वं (४) त्रैशृङ्गं त्वयि तद्दधातु (५) ॥" (ग) तथा जगती-त्यनुवर्त्तनीयम्। तेनान्तेन जागतेन पादेन शेषैश्चतुर्भिर्गायत्रै-"रुपरिष्टाज्ज्योति"र्नाम जगती भवति। यथा ऋग्वेदे—"नवानां नवतीनां (१) विषस्य रोपुषीणाम् (२)। सर्व्वासामग्रभन्नामा (३) आरे अस्य योजनं (४) हरिष्ठा मधु त्वा मधुला चकार ॥"

इति त्रिष्टुब्जगत्यधिकारः ॥ (घ)

অক্ষর তাহাকে "মধ্যেজ্যোতি"নামক ত্রিষ্টুবছন্দ বলে এবং যাহার পূর্ব্ব দুইপাদ ও পরের দুইপাদ আট অক্ষর এবং মধ্যপাদ বার অক্ষর, তাহাকে 'মধ্যেজ্যোতি' নামক জগতী বলে।

৫৪। যাহার পূর্ব্ব চারিপাদে আট অক্ষর ও পরপাদে এগার অক্ষর, তাহাকে 'উপরিষ্টাজ্জ্যোতি' ত্রিষ্টুব্ বলে এবং যাহার পূর্ব্ব চারিপাদে আট অক্ষর ও পরপাদে বার অক্ষর তাহাকে "উপরিষ্টাজ্জ্যোতি" নামক জগতী কহে।

---

(क) अत्र च चतुर्थपादस्याक्षराधिक्येन पञ्चमपादस्याक्षरन्यूनत्वं परिहृतं, वैदिकमन्त्रेषु एवैव रीतिः प्रायशो दृश्यते।

(ख) अत्रापि पञ्चमपादस्याक्षराधिक्येन प्रथमद्वितीयपादयोर्न्यूनत्वं परिहृतं।

(ग) विराड्रूपत्वात् तृतीयपादस्य षडक्षरत्वेऽपि न विरोधः अकृण्वमिति पूरणात् पादपूरणं, तुवयितुवद्दधात्विति पादपूरणञ्च।

(घ) कात्यायनोक्ता यथा—षष्ठं त्रिष्टुप् त्रैष्टुभपदा। १। द्वौ तु जागतौ यस्याः सा जागती जागती त्रैष्टुभि त्रिष्टुप्। २। वैराजौ जागतौ चाभिसारिणी। ३। नवकौ वैराज-

## एकस्मिन् पञ्चके छन्दः शङ्कुमती ॥ ५५ ॥

यद्येकः पञ्चाक्षरः पादो भवति, त्रयश्च षडक्षराः, तदा 'शङ्कुमती' नाम गायत्री भवति। छन्दोग्रहणे प्रकृते पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थम्। तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षिता 'शङ्कुमती' भवति। (क) उष्णिहो यथा सामवेदे—"उतासौ देवदिति (१) रुरुष्यतां नाम उग्रः (२)। उरुस्यन्त भवतो (३) वृद्धशवसः (४) ॥"

अनुष्टुभो यथा ऋग्वेदे—"पितुं न स्तोषम् (१) महो धर्म्माणं तविषीम् (२)। यस्य त्रितो व्योजसा (३) वृत्रं विपर्व्वमर्दयत् (४) ॥" इतरथा ह्यनन्तरसम्प्रत्ययः स्यात्॥

৫৫। পাঁচ অক্ষর একপাদ ও ছয় অক্ষর তিনপাদে "শঙ্কুমতী" নামক গায়ত্রীচ্ছন্দ হয়। পূর্ব্ব হইতে ছন্দ অধিকারসত্ত্বেও এই সূত্রে পুনরায় ছন্দঃ-শব্দের গ্রহণ সামান্য ছন্দের গ্রহণার্থ; সুতরাং সকল ছন্দের যথোক্ত ত্রিপাদ পাঁচ অক্ষর এক পাদের সহিত মিলিত হইলে 'শঙ্কুমতী' নামক সেই সেই ছন্দ হইবে।

त्रैष्टुभश्च। ४। द्वौ वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना। ४। एकादशिनस्त्रयोऽष्टकाश्च विराड्रूपा। ६। द्वादशिनस्त्रयोऽष्टकाश्च ज्योतिष्मती। यतोऽष्टकस्ततो ज्योतिः चत्वारोऽष्टका जागतश्च महाबृहती। ८। मध्ये षैद्ययवमध्या। ९। आद्यौ दशकावष्टकास्त्रयः। पङ्क्त्युत्तरा विराट् पूर्व्वा वा। १०। इति दशविधास्त्रिष्टुभः॥ सप्तमं जगती जागतपदा। १। षष्टिनस्त्रयः तौ च द्वौ महासतोबृहती। २। अष्टकौ सप्तकः षटकौ दशकौ नवकश्च षडष्टका महापङ्क्तिः। इति त्रिविधा जगत्यः।

(क) 'अनादेशे पादाश्चत्वार' इति परिभाषया चत्वार एकादशिनः पादा इत्यर्थः। 'जागतसूक्ते स्थिता जगती, त्रिष्टुप्सूक्ते स्थिता त्रिष्टुप्। 'नाव क्रमादर' इति तन्त्राध्यकारैस्तत्तदुदाहरणान्यपि तत्र दर्शितानि। पिङ्गलोक्ताविलक्षणमिदं छन्दः, अत्रापि क्रमो न विवक्षितः। इदमेव छन्दः पिङ्गलाचार्य्येण जगतीज्योतिष्मतीसंज्ञकत्वेनोपादाय पुरस्ताज्ज्योतिष्मतीत्यादिना विविधमुक्तम्, कात्यायनेन तु चतुश्चत्वारिंशदक्षरत्वात्त्रिष्टुप्छन्दोमध्ये परिगणितम्। एतेषामुदाहरणानि कात्यायनशाखायां सन्ति, बाहुल्यभयात् नोद्धृतानि। त्रिष्टुभि विशेषमाह कात्यायनः—'चतुर्णा अपि

## षट्के ककुम्म [द्म]-ती ॥ ५६ ॥

एकस्मिन् षडक्षरे पादे, अन्येषु यथालक्षणमुपात्तेषु छन्दोमात्रेषु 'ककुम्मती' नाम [ गायत्री ] भवति ॥ ( क )

## त्रिपादणिष्ठमध्या पिपीलिकमध्या ॥ ५७ ॥

यदाद्यन्तौ पादौ बह्वक्षरौ, मध्यमोऽल्पतराक्षरः, तदा अणिष्ठ-मध्या सती 'पिपीलिकमध्या' नाम भवति। अयमर्थः—आद्यन्तौ पादावष्टाक्षरौ, मध्यमस्त्र्यक्षरः, एवं त्रिपाद्गायत्री पिपीलिकमध्ये-त्यर्थः, एवं चतुरक्षरे पञ्चाक्षरेऽपि मध्यमे पादे 'पिपीलिकमध्या'

৫৬। ছয় অক্ষর এক পাদের সহিত মিলিত হইলে পূর্ব্বের সমস্ত ছন্দেরই "ককুম্মতী" সংজ্ঞা হয়।

৫৭। যাহার আদি ও অন্তপাদ বহু অক্ষরবিশিষ্ট এবং মধ্য পাদ অল্লাক্ষরবিশিষ্ট, এরূপ গায়ত্রীকে "পিপীলিকমধ্যা" কহে, অর্থাৎ যাহার প্রথম ও শেষপাদ অষ্টাক্ষর এবং যাহার মধ্যপাদ তিন অক্ষর, এইরূপ তিনপাদ-বিশিষ্ট

त्रिष्टुभ एवे'ति। अस्यार्थः—त्रिष्टुभश्चत्वारिंशदक्षरत्वे प्राप्ते सति चतुर्भिरक्षरैरूनापि हीनापि विराड्रूपादित्रिष्टुबधिकारोक्ता त्रिष्टुभ एव स्युः; एतेन पञ्चभिश्चतुर्भिस्त्रिभिर्व्वाक्षरैर्हीनाऽपि सप्तत्रिष्टुप्सूक्तस्यास्त्रिष्टुभ एव, न तु तासां निचृत्पङ्क्तित्वं भुरिक्पङ्क्तित्वञ्च। यथा पदानाम् अष्टाक्षरत्वाभावेऽपि समुदायेन षडष्टकत्वात् संज्ञा कृता। इदमुदाहरणम्। अन्यत्रापि अनया रीत्या पादाक्षरनियमो भविष्यति, त्रिवृत् वज्रत्वं स्तोभतीति त्रिष्टुप इति निरुक्तम्। जगतीगत-तमं छन्दो जलचरगतिर्व्वा जल्गल्यमानोऽसृजदिति ब्राह्मणमिति निरुक्तम्।

( क ) ककुष्टुभो यथा—"स पूर्व्यो महोनां (१) वेनः क्रतुभिरानजे (२) यस्य द्वारा मनुः पिता (३) देवेषु धिय आनजे" ॥ (४) ( सामवेदे ) ॥ उष्णिहो यथा—"इन्द्रं याहि मत्स्व (१) चित्रेण देवराधसा (२) सरो न प्रास्युदरं ( ३ ) सपीतिभिरासोमेभिरुरुस्फिरम् ( ४ ) ॥" ( अथर्वेद: ) ॥ पङ्क्त्या यथा—"सदन सुवीर्यं (१) ततक्षति महाश्वम् (२)। देवानां य इन्वती (३) यजमान इन्वति ॥" (४) ( अथर्वेद: ) ॥ त्रिष्टुभो यथा—"इममन्तमुपस्थं (१) मधुना संसृजामि ( २ )। प्राजापतेर्मुखमेतद्द्वितीयम्। ( ३ ) तेन पुंसोऽभिभवासि (४) सर्वान् अवशान् वशिन्यसि राज्ञी ( ५ ) ॥

विध्यति। यत् किञ्चित्त्रिपाच्छन्दो लघुमध्यमपादं, तत् सर्व्वं पिपीलिकमध्यमुच्यते॥ (क)

## विपरीता यवमध्या॥ ५८॥

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमश्च बह्वक्षरः, सा गायत्री 'यवमध्या' नाम भवति। एवमुष्णिगादिष्वपि योज्यम्॥ (ख)

## ऊनाधिकेनैकेन निचृद्भूरिजौ॥ * ५९॥

चतुर्विंशत्यक्षरा गायत्री एकेनाक्षरेण न्यूनेन, सा 'निचृ'दिति विशेषसंज्ञां लभते। एकेनाधिकेन भूरिगिति। एवमुष्णिगादिष्वपि द्रष्टव्यम्॥ (ग)

গায়ত্রীর "পিপীলিকমধ্যা" এবং অন্যান্য সমস্ত তিনপাদবিশিষ্ট ছন্দেরও মধ্যপাদ অল্পাক্ষর হইলেই পিপীলিকমধ্যা সংজ্ঞা হইবে।

৫৮। যাহার প্রথম ও অন্তপাদে অল্প অক্ষর এবং মধ্যপাদে বহু অক্ষর, এরূপ গায়ত্রীর নাম "যবমধ্যা" এবং উষ্ণিক্ প্রভৃতি ছন্দেরও মধ্যপাদ বহু অক্ষর বিশিষ্ট হইলে তাহার "যবমধ্যা" সংজ্ঞা হইবে।

৫৯। ২৪ অক্ষর গায়ত্রীতে ২৩ অক্ষর হইলে "নিচৃৎ" ও ২৫ অক্ষর হইলে "ভূরিক্" এইরূপ সংজ্ঞা হয়। উষ্ণিক্ প্রভৃতি ছন্দেও এই প্রকার বুঝিতে হইবে।

---

(क) तन्नोदाहरणम् गायत्र्या यथा—"पृक्षिन्यमाणो हर्य्यतो (१) विचक्षणो (२) राजा देवः समुद्रियः (३)॥" ऋग्वेदे। उष्णिहो यथा—"हरी यस्य सुयुजा विव्रता (१) वेरर्वन्ता नु शेपा (२)। उभा रजी न केशिना पतिर्दन् (३)॥" ऋग्वेदे। अनुष्टुभो यथा—"पर्य्यूषु प्र धन्व वाजसातये (१) परि वृत्राणि सक्षणिः (२)। द्विषस्तरध्या ऋणया न ईयसे (३)॥" ऋग्वेदे। बृहत्यां यथा।—'यवीभोवीरमध्यसीमदेषुगाय (१) गिरे सहा विचेतसम् (२) इन्द्रं नामश्रुत्यं शाकिनं वचो यथा (३)॥" अथर्ववेदः।

(ख) तन्नोदाहरणं गायत्र्या यथा—"समुद्रेयो वसूनां (१) यो रायामानेता य इड़ानाम् (२)। सोमो यः सुक्षितीनाम् (३)॥" अथर्ववेदः। उष्णिहो—"सुदेवः स महासति (१) सुवीरो नरो मरुतः समर्त्यः (२)। यं त्रायध्वे स्याम ते (३)॥" ऋग्वेदे

* चर्त्तयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः, निकृष्टमेकाक्षरेण हीनं निचृदिति। भरणात् भुरिक् इति उच्यते॥ एकाक्षरेण भरणात् चतुर्विंशत्यात्मकगायत्र्यादौ भुरिगिति संज्ञा॥१

(ग) निचृद्गायत्र्या यथा—'अग्निमिन्धानो मनसा (१) धियं सचेत मर्त्यः (२)।

## द्वाभ्यां विराट् स्वराजौ ॥ ६० ॥

ऊनाधिकग्रहणमनुवर्त्तते। द्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां गायत्री यथाक्रमं विराट् स्वराट् संज्ञिका भवति। एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥ (क)

৬০। দুই অক্ষর কম ও দুই অক্ষর বেশী হইলে যথাক্রমে গায়ত্রীচ্ছন্দের বিরাট্ সংজ্ঞা হয়।

---

अग्निमिन्धे विवस्वभिः (३) ॥" (सामवेदे)। निचृदुष्णिहो यथा—"इषेत्वोर्जे त्वा वायवस्थ: (१) देवो वः सविता प्रार्पयतु (२)। श्रेष्ठतमाय कर्म्मणे (३) ॥" (यजुर्व्वेदे)। निचृदनुष्टुभो यथा—श्वेतं धूम कृण्वति (१) दिविषच्छुक्र आततः (२)। सूरो नहि द्युताद्यम् (३) कृपा पावक रोचनः (४) ॥" (अथर्वे)। निचृद्बृहत्या यथा—"बलं धेहि तनूषु नो (१) बलमिन्द्रानडुत्सुनः (२) बलं तोकाय तनयाय (३) जीवसे त्वं हि बलदा असि (४) ॥" (ऋग्वेदे)। निचृत्पङ्क्त्या यथा—"अग्ने तव पवो वयो (१) महिभ्राजन्ते अर्च्चयो विभावसो (२)। बृहद्भानो शवसा वाजमुक्थ्यं (३) दधासि दाशुषे कवे ॥" (४) ऋग्वेदे। निचृत्त्रिष्टुभो यथा—इदन्त एकं परउत एकं (१) तृतीयेन ज्योतिषा संविशस्व (२)। संवेशनस्तन्वे चारु धेहि (३) प्रियो देवानां परमे जनित्रे (४) ॥" (सामवेदे)। निचृज्जगत्या यथा—"अतक्षतमर्थं वाजिनं नरं (१) गिरो न इन्द्रमुपयन्ति विश्वतः (२) वाजसनिं पूर्भिदं तूर्णिमप्तुरम् (३) धामसाचमभिसाचं स्वर्विदम् (४) ॥" (ऋग्वेदे)। भुरिगनुष्टुभो यथा—"तां म आवह जातवेदो (१) लक्ष्मीमनपगामिनीम् (२) यस्यां हिरण्यं विन्देयम् (३) गामश्वं पुरुषानहम् (४) ॥" (अथर्वे)। भुरिक्त्रिष्टुभो यथा—"य ऋतुभ्यो हूतमिव वाचमिव्य (१) उपस्तीर्य्यैतरो धेनुमीडे (२)। ये वातजूतस्तरणिभिरेवैः (३) परिद्यां सद्यो अपसो बभूवु (४) ॥" (अथर्वे)। भुरिग्जगत्या—"इयो न विद्वान् अयुजिरियं धुरि (१) तं वहामि प्रतरणिमवस्युवम् (२)। नास्य वीश्मि विमुचनाद्धतं पुनः (३) विद्वान् पथः पुरः एत ऋजुनेषति (४) (अथर्वे)।

(क) विराड् गायत्र्या यथा—"अभीषुणः सखीनामविता जरितॄणाम् (१)। शतं भवास्यूतये (२) ॥" (सामवेदे)।

विराडुष्णिहो यथा—"दूतं गायत्रं न वचमसाहं (१) चिकित्विरे आविनावाम् (२) आयो यमभ्यतीदं (३) ॥" (अथर्वे) । विराडनुष्टुभो यथा—यदि गौरी ऋतुषा (१) अग्निमिन्धान-

## आदितः सन्दिग्धे ॥ ६१ ॥

यदा षड्‌विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यं, किं गायत्री स्वराट्, उत उष्णिग्‌विराडिति? एवं सन्दिग्धे छन्दसि आदिभूतात् पादान्निर्णयः कर्त्तव्यः। यदि प्रथमः पादो गायत्र्यास्तदा गायत्र्येवासौ। तथोष्णिहस्तदोष्णिगिति। एवं सर्व्वत्र ॥

## देवतादितश्च ॥ ६२ ॥

इदमपरं निर्णयनिमित्तमुच्यते। सन्दिग्धे छन्दसि, देवतादेश्च निर्णयः कर्त्तव्यः। 'आदि' ग्रहणं स्वरादिपरिग्रहार्थम्। कस्य छन्दसः का देवतेति निर्णयः कर्त्तव्यः यथा इत्यपेक्षायामिदमुच्यते ॥

৬১। ছাব্বিশ অক্ষর ছন্দের দুই অক্ষর বেশী ধরিলে স্বরাট্ গায়ত্রীছন্দ হইতে পারে এবং দুই অক্ষর কম করিয়া ধরিলে বিরাট্ উষ্ণিক্ ছন্দও হইতে পারে; সুতরাং ঐরূপ স্থলে কোন্ ছন্দ হইবে, এই আশঙ্কায় আদি পাদ দ্বারা ছন্দোনির্ণয় করিতে হইবে। যদি গায়ত্রীর প্রথমপাদ হয় তবে গায়ত্রী, উষ্ণিকের প্রথম পাদ হইলে উষ্ণিক্ হইবে, অন্যান্য সন্দেহস্থলে এই প্রকারে সন্দেহের নিরাস করিতে হইবে।

---

मर्त्ताः (२) अजुह्वत्यमानुषक् (३) ॥ (सामवेदे)। विराड्‌बृहत्या यथा—"अग्ने विवस्वदुषस (१) चित्रं अमर्त्ताः (२) आदाशुषे जातवेदा वहत्वं (३) मद्यदेवा उषर्बुधः (४) ॥" विराट्‌त्रिष्टुभो यथा—मन्त्रब्राह्मणे—"परिधत्त धत्त वाससैनां (१) शतायुषीं कृणुत दीर्घमायुः (२) शतं च जीव शरदः सुवर्च्चा वसूनि चार्य्ये विभजासि जीवन् (२) ॥" विराड्‌जगत्या यथा—"युयमस्मभ्यं धिषणाभ्यस्परि (२) विद्वांसो विश्वा नर्य्याणि भोजना (२)। द्युमन्तं वाजं वृषशुष्ममुत्तमम् (३) मानो रयिमृभवस्तक्षतावयः (४) ॥" (ऋग्वेदे) स्वराड्‌गायत्र्या यथा—"विद्वांसाविदुरः पृच्छे, (१) दविद्वानित्थापरो अचेताः (२)। नूचिन्नु मर्त्ते अक्रौ (३) ॥" (ऋग्वेदे) स्वराडनुष्टुभो यथा—"लवणाम्भसि जातोऽसि (१) उभोऽसि हृदयं तव (२)। लवणस्य पृथिवी माता (३) लवणस्य वरुणः पिता (४) ॥" (भवदेवः)। स्वराड्‌बृहत्या यथा—वितन्तुं यन्ते मघवन्। "विपश्चितोर्य्यो विपोजनानाम् (२)। उपक्रमस्व पुरुरूपमा (१) भर वाजं नेदिष्ठमूतये (४) ॥" (ऋग्वेदे)। स्वराट्‌त्रिष्टुभो यथा—"इन्द्रासोमा परि वां भूतु विश्वतः (१) इयं मतिः कक्ष्याश्वेव वाजिना (२)। यां वां होत्रां परिहिनोमि मेध (३) ॥ येन ब्रह्माणि नृपतीव जिन्वतम् ॥"

**অগ্নিঃ সবিতা সোমো বৃহস্পতির্মিত্রাবরুণাবিন্দ্রো বিশ্বে দেবা দেবতাঃ ॥ ৬৩ ॥**

গায়ত্র্যাদীনাং জগতীপর্য্যন্তানাং যথাক্রমমগ্ন্যাদয়ো দেবতা বেদিতব্যাঃ। তত্র সন্দিগ্ধে ছন্দসি, যদ্যাগ্নেয়ং তদা গায়ত্রী, যদা সাবিত্রং তদোষ্ণিক্। এবং সর্ব্বত্র। বৈদিকেষ্বেব ছন্দঃসু নিচৃদ্ভুরিজৌ, তথা বিরাট্স্বরাজৌ চ দৃশ্যেতে, ন লৌকিকেষু। অতো লৌকিকপক্ষে সন্দেহাভাবান্নির্ণয়নিমিত্তভূতা দেবতাদয়ো নেষ্যন্তে ॥

**স্বরাঃ ষড্জাদয়ঃ ॥ ৬৪ ॥**

ষড্জর্ষভগান্ধারমধ্যমপঞ্চমধৈবতনিষাদাঃ স্বরাঃ গায়ত্র্যাদিষু ক্রমেণ দ্রষ্টব্যাঃ ॥

**সিতসারঙ্গপিশঙ্গকৃষ্ণনীললোহিতগৌরা বর্ণাঃ ॥ ৬৫ ॥**

গায়ত্র্যাদিষু ক্রমেণ বর্ণাঃ নির্ণয়নিমিত্তমভিধীয়ন্তে ॥

৬২। দেবতাদি দ্বারাও সন্দিগ্ধ স্থলের ছন্দোনির্ণয় করিতে হয়। আদিশব্দ স্বরাদির পরিগ্রাহক।

৬৩। দেবতার দ্বারা ছন্দোনির্ণয় করিতে হইলে কোন্ ছন্দের কোন্ দেবতা তাহা জানা আবশ্যক, অতএব দেবতানির্ণয়ের জন্যই এই সূত্র করা হইল। গায়ত্রী হইতে জগতী পর্য্যন্ত পূর্ব্বোক্ত সাত প্রকার ছন্দের ক্রমান্বয়ে সূত্রোল্লিখিত অগ্নি প্রভৃতি সাতটি দেবতা বুঝিতে হইবে; কাজেই সন্দেহস্থলে যে দেবতার নির্দ্দেশ থাকিবে, তদনুসারেই ছন্দের নির্ণয় করা হইবে অগ্নি দেবতা নির্দ্দেশ থাকিলে গায়ত্রী, সবিতা দেবতা নির্দ্দেশ থাকিলে উষ্ণিক্ ইত্যাদি। বেদোক্ত ছন্দেই বিরাট্ স্বরাট্ প্রভৃতি সংজ্ঞাভেদ হয়, লৌকিক ছন্দে তাহা হয় না, সুতরাং লৌকিক ছন্দে সন্দেহের সম্ভাবনা না থাকায় সন্দেহবারণার্থ দেবতাদি নির্দ্দেশেরও কোন আবশ্যকতা নাই।

৬৪। গায়ত্রী হইতে আরম্ভ করিয়া জগতী পর্য্যন্ত সাত প্রকার ছন্দের স্বরও যথাক্রমে ষড়্জ, ঋষভ, গান্ধার, মধ্যম, পঞ্চম, ধৈবত ও নিষাদভেদে সাত প্রকার।

**अग्निवेश्य [ अग्निवेश्म ] काश्यपगौतमाङ्गिरसभार्गव-कौशिकवाशिष्ठानि गोत्राणीति ॥ ६६ ॥**

गायत्र्यादीनां क्रमेणैतानि गोत्राणि भवन्तीति वाक्यशेषः । अत्र शेषनामाः कृतयः, श्यामान्यतिच्छन्दांसि, इत्येवमादिकमवधीयते छान्दसाः । तन्नोपपद्यते । कृतीनामतिच्छन्दसाञ्च निचृद्भूरिजो-विराट्स्वराजोश्च प्रवेशाभावात् कश्चिन्नास्ति संशयः, यस्य निर्णयनिमित्तं वर्णोपन्यासः क्रियते, तदपि ऋषिदैवतास्वरवर्णानां ज्ञानान्निःश्रेयस-मिच्छन्ति छान्दसाः ॥ (क)

इति भट्टहलायुधकृतायां छन्दोवृत्तौ तृतीयोऽध्यायः ॥

৬৫। গায়ত্রী প্রভৃতি সপ্তবিধ ছন্দের যথাক্রমে সিত সারঙ্গ প্রভৃতি সূত্রোপাত্ত সপ্তবিধ বর্ণ অভিহিত হইল।

৬৬। গায়ত্রী প্রভৃতি সপ্তবিধ ছন্দের গোত্র যথাক্রমে অগ্নিবেশ্য, কাশ্যপ, গৌতম, অঙ্গিরস, ভার্গব, কৌশিক ও বাশিষ্ঠভেদে সাত প্রকার। যে সমস্ত ছন্দের পূর্ব্বোক্তরূপে সন্দেহের আশঙ্কা নাই, সেই সেই স্থলে দেবতাদিনির্ণয়ের সংশয়নিরাসরূপে আবশ্যকতা না থাকিলেও ছন্দের দেবতাদিজ্ঞানদ্বারা শুভাদৃষ্ট হয়, ইহাই দেবতানির্ণয়ে ছন্দঃশাস্ত্র-প্রণেতার অভিপ্রায়।

তৃতীয় অধ্যায় সমাপ্ত ॥ ৩

(क) ननु भगवता पिङ्गलाचार्य्येण कृतो योऽयं दैवतादिनियमः, स किं विधिर्नियमो-ऽनुवादार्थो वा ? नाद्यस्तत्तद्दानुक्रमणिकाकारैः स्मृतिकारैश्च संहितास्थमन्त्राणां कर्मकाण्डीय-मन्त्राणाञ्च दैवतादीनां विहितत्वेनापूर्व्वत्वाभावात् । किञ्च 'गायत्र्याः सविता जातवेदस'इ ति त्रिष्टुभोऽग्निर्दैवता इत्यादिना विरोधात् समव्याहृतीनामपि छन्दसां दैवतानां चानेन सह महाविरोधापातात् । यथाह संवर्त्तः—"व्याहृतीनाञ्च सर्व्वासामार्षञ्चैव प्रजापतिः । गायत्र्यु-ष्णिगनुष्टुब्बृहती पङ्क्तिरेव च ॥ "त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै । अग्निर्वायुस्तथा सूर्य्यो बृहस्पतिरपांपतिः । इन्द्रश्च विश्वेदेवाश्च दैवताः समुदाहृताः ॥" नापि द्वितीयोऽनन्त-व्यभिचारात् । नापि तृतीयो निष्फलत्वाद्विरोधापाताच्च । अत्रेदमवधेयम्—येषां मन्त्राणां, छन्दोदैवतादीनि नोक्तानि, अपि तु विराट्स्वराडादित्वेनानवधारितत्वेन 'गायत्र्युष्णिग्भ्याम्', 'उष्णिगनुष्टुब्भ्याम्' इत्यादि संशयो भवेत्, तत्रायपादेन कश्चिद्दैवतादिभ्यश्च विशेषः परिहरणीयः

## चतुर्थोऽध्यायः

### चतुःशतमुत्कृतिः ॥ १ ॥ (क)

चतुरधिकं शतं चतुःशतम्, मध्यमपदलोपी समासः। अथवा चत्वारि च शतञ्च चतुःशतम्, द्वन्द्वसमासः। कर्म्मधारयपक्षस्तु नेष्यते। तत्र चतुःशतानीति प्राप्नोति। (ख) यत्र चतुःशतमक्षराणां संख्या भवति, तदुत्कृतिर्नाम च्छन्दः। यथा यजुर्व्वेदे—"होता यक्ष-

১। একশত চারি অক্ষরে "উৎকৃতি" নামক ছন্দ হইবে।

---

इत्यभिप्रायेण भगवता पिङ्गलाचार्य्येण 'आदितः सन्दिग्धे' (३।६१) इत्यादि सप्त सूत्राणि विहितानि इति। एतेषामुदाहरणानि बहूनां वेदशाखानामनुपलभ्यत्वाद्दुर्लभानि।

यत्तु "शुक्लमुच्चं विजानीयान्नीचं लोहितमेव च। श्यामं तु स्वरितं विद्यादग्निरुच्चस्य देवता॥ नीचे सोमं विजानीयात् स्वरिते सविता भवेत्। उदात्तं ब्राह्मणं विद्यान्नीचं क्षत्रियमेव च॥ वैश्यं तु स्वरितं विद्यादुदात्तं तु भारद्वाजं (?) नीचं गोतममित्याहु गार्ग्यं तु स्वरितं विदुः॥ विद्यादुदात्तां गायत्रीं नीचं त्रैष्टुभमेव च। जागतं स्वरितं विद्यादेवमेव नियोगतः॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः। त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः॥ उच्चौ निषादगान्धारौ नीचावृषभधैवतौ। शेषास्तु स्वरिते ज्ञेयाः षड्जमध्यमधैवताः॥" इति याज्ञवल्कीयशिक्षोक्तेः, त्रिष्टुभो लोहितो वर्णः, सोमो देवता, ऋषभधैवतौ स्वरौ गोतम ऋषिः। जगत्याः श्यामो वर्णः सविता देवता, षड्जमध्यमपञ्चमाः स्वराः गार्ग्य ऋषिरित्यादिभिः पिङ्गलोक्तेनानैक्यं, तदपि शाखाभेदेन परिहरणीयम्। ननु शिक्षायास्तु निषादादिसप्तस्वराणामुदात्तादिस्वरत्रयान्तर्गतत्वेनाभिहितत्वात् स्वराणान्तु गायत्रीत्रिष्टुब्जगतीनामनुगतत्वेन कथमुष्णिगनुष्टुब्बृहतीपङ्क्तीनां स्वरवर्णादीनां सम्भवः? उच्यते—उष्णिगादीनां चतुर्णामपि गायत्र्यादित्रयाणां पादोपजीव्यत्वेन स्वरवर्णादयः सम्भवन्ति। विशेषस्तु नारदीयशिक्षायामनुसन्धेयः।

(क) किञ्च अथ छन्दांसि गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीशक्वर्य्यतिशक्वरीअष्ट्यत्यष्टिधृत्यतिधृतिकृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृतयश्चतुर्व्विंशत्यक्षरादीनि चतुरक्षराणीति माध्यन्दिनशाखोपक्रमणिकासूत्रमपि न सङ्गच्छते।

(ख) उत्कृत्यादिकृतिपर्य्यन्तानामुदाहरणानि वृत्तिकृता न दर्शितानि, अतस्तान्युपक्रमणिकाभाष्यप्रदर्शितानि अन्यान्यपि च सुप्रसिद्धानि वृत्तिमध्ये मया सन्निवेशितानि। अत्र अक्षराधिक्यमपि

दक्षिणो च्छागस्य (१) हविष आत्तामद्यमध्य (२) तो मेद उद्भृतं (३) पुरा द्वेषोभ्यः (४) पुरापौरुषेय्या गृभो (५) घस्तानूनं घासे अज्राणां (६) यवसप्रथमानां (७) सुमत्क्षराणां शतमिन्द्रियाणाम् (८) अग्नि-ष्वात्तानां पीवोपवसनानां (९) पार्श्वतः श्रोणितः शितामतः (१०) उत्सादतोऽङ्गादङ्गादवत्तानां (११) करत एवाश्विना जुषेतां (१२) हविरेवाश्विना जुषेताम् (१३) ॥"

## 'चतुरश्चतुरस्त्यजेदुत्कृतेः ॥ २ ॥

चतुःशताक्षराच्छन्दसः क्रमेण चतुरश्चतुरः संख्याविशेषांस्त्यजेत्। एतदुक्तं भवति—उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दां-स्यन्यानि स्थापयेत् अष्टचत्वारिंशदक्षरं यावत् ॥

## तान्यभिसंव्याप्रेभ्यः कृतिः ॥ ३ ॥

तान्युत्कृतेरनन्तराणि छन्दांसि, अभि सम् वि आङ् प्र इत्येतेभ्यः पराणि 'कृति' संज्ञानि भवन्ति। अत्र शताक्षरं छन्दोऽभि-कृतिः। यजुर्वेदे—"देवो अग्निः स्विष्टकृत् (१) देवान्यायक्षद्-यथायथं (२) होताराविन्द्रमश्विना (३) वाचा वाचँ सरस्वती (४) मग्निँ सोमँ स्विष्टकृत् (५) स्विष्ट इन्द्रः सुत्रामा (६) सविता वरुणो-भिष (७) गिष्टो देवा वनस्पतिः (८) स्विष्टा देवा आज्यपाः स्विष्टो (९) अग्निरग्निना होता होत्रे स्विष्टकृद् (१०) यशो न देधदिन्द्रियम् (११) ऊर्ज्जमपचितिं स्वधां वसुवने (१२) ॥" षण्णवत्यक्षरं संस्कृतिः

२। উৎকৃতির চা'র চা'র অক্ষর বাদ দিয়া আটচল্লিশ অক্ষর পর্য্যন্ত বক্ষ্যমাণ ছন্দঃসকল কথিত হইবে।

৩। কৃতি শব্দের পূর্ব্বে অভি, সম্, বি, আঙ্ ও প্র যোগ করিয়া উৎকৃতির পরবর্ত্তী পাঁচটী ছন্দের নাম হইবে। অর্থাৎ একশত অক্ষর ছন্দের নাম অভিকৃতি

---

न दुष्टं चतुःशतशब्दस्य वर्णोद्गमगायत्रीपादानामष्टाक्षरन्यूनाधिक्यमपि सम्भवति, तच्च प्रागुदा-हृतम्। उत्कृत्यादिकृतिपर्य्यन्तेषु छन्दःसु पादनियमो न केनापि मुनिना कृतो दृष्टः, अनुक्रमणिकाभाष्यकारलिखिता नियमाः क्वचिद्दृश्यन्ते।

यथा यजुर्वेदे—"देवोऽग्निः स्विष्टिकृत् (१) सुद्रविणामन्द्रःकविः (२) सत्यमन्मायजी (३) होता होतुर्होतुरायजी (४) यानग्ने यान् देवानयजा (५) अपि प्रेर्थिते होत्रे (६) अमत्सासता समनुषाम् (७) होत्रादेवं गमाँ (८) दिवि देवेषु यज्ञेषु रये (९) संस्विष्टिकृच्चाग्ने होताभू (१०) वसुवने वसुधे यस्य (११) नमो वाके व्रीह्विवौषट् (१२) ॥ द्वानवत्यक्षरं विकृतिः यथा—इमे सोमाः सुरामाणां (१) च्छागैर्न मेषैर्ऋषिभिः (२) सुता यास्येनताक्मभिः (३) लाजैर्महं स्वसोः अभूमः (४) आसरेण परिष्कृता (५) शुक्राः पयस्वन्तोऽमृताः (६) प्रस्थिताः सोममधुश्रुतः (७) तामश्विना सरस्वती (८) इन्द्रः सुत्रामा वृत्रहा (९) जुषन्तां सोमे मधु (१०) पिबन्तु मदन्तु वियन्तु सोमम् (११) ॥ अष्टाशीत्यक्षरमाकृतिः। यथा—"भगा अनुप्रयुक्ता (१) मिन्द्रो यातु पुरोगवः (२) यस्याः स्वदोहविर्धाने (३) पूयो यास्यनुमीयते (४) ब्राह्मणा यस्यामर्पयति (५) ऋग्भिः साम्ना यजुर्विदः (६) युध्यन्ते यस्यामृत्विजम् (७) सोममिन्द्राय पातये (८) अमोभूतिर्हविषायां सुमेधां (९) यज्ञे ददातु सुमनस्यमाना (१०) ॥" (क) चतुरशीत्यक्षरं प्रकृतिः। यथा—'सूर्यश्च मामनुरश्च मन्युपतयश्च मनुराकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत् किञ्चिद्दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि ॥" (ख)

ছিয়ানব্বই অক্ষর ছন্দের নাম সংস্কৃতি, ৯২ অক্ষর ছন্দের নাম বিকৃতি ৮৮ অক্ষর ছন্দের নাম আকৃতি ও ৮৪ অক্ষর ছন্দের নাম প্রকৃতি হইবে।

---

(क) अत्राष्टौ गायत्र्याः पादा द्वौ जागतौ, अत्रापि पूर्ववत् ऊहादा न्यूनता परिहर्त्तव्या।

(ख) प्रातःसन्ध्याचमने "यद्रात्र्या पापमकार्षं रात्रिस्तदवलुम्पतु" इत्यादि मन्त्रस्यपाठो दाक्षिणात्यमध्यदेशस्थानां वेदविदां सम्मतः। अत्रत्याः गौडीयाः पुनः "यदह्ना पापमकार्षं अहस्तदवलुम्पतु" इत्यादि पाठं समीचीनतया मन्यन्ते। अनयो कतरः समीचीनतया प्रतिभाति तत् प्रजापतिरेव जानाति।

## प्रकृत्या चोपसर्गवर्ज्जितः ॥ ४ ॥

उपसर्गेण वर्जितः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनैतदुक्तं भवति, अशीत्यक्षरं छन्दः कृतिर्नाम भवति। यथा यजुर्वेदे —सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दांसि अङ्गानि यजूंषि नाम सामते। तनूर्व्वामदेव्यं यज्ञो यज्ञियं पुच्छं धिष्ण्यियां सफाः सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ॥

## धृत्यष्टिशक्करीजगत्यः ॥ ५ ॥

कृतेरधस्ताद् धृतिरष्टिः शक्करी जगतीत्येते शब्दाः क्रमेण व्यवस्थापनीयाः ॥

## पृथक् पृथक् पूर्व्वत एतान्येवैषाम् ॥ ६ ॥

एषां धृत्यादीनां पूर्व्वतः पृथक्पृथगेतान्येव शब्दरूपाणि विन्यसेत्। पृथक् पृथग्ग्रहणं प्रत्येकं पूर्व्वत्वज्ञापनार्थम्। अन्यथा हि समुदायपूर्व्वत्वमेषां स्यात्। तेनायमर्थः—धृतिशब्दात् पूर्व्वं धृतिशब्दः, अष्टिशब्दात् पूर्व्वमष्टिशब्दः, शक्करीशब्दात् पूर्व्वं शक्करीशब्दः जगतीशब्दात् पूर्व्वं जगतीशब्दः स्थापनीयः ॥

## द्वितीयं द्वितीयमतितः ॥ ७ ॥

अत्र द्वितीयं द्वितीयं शब्दरूपमतिशब्दात् परतः प्रयोक्तव्यम्। एवं

৪। উপসর্গরহিত শুদ্ধ কৃতি শব্দ স্বরূপেই অবস্থিত হইবে। অর্থাৎ দ্বিতীয় সূত্র দ্বারা পূর্ব্বোক্ত ৮৪ হইতে ৪ বাদ দেওয়ায় ৮০ অক্ষর ছন্দের নাম হইল কৃতি।

৫। কৃতির পরে ধৃতি, অষ্টি, শক্করী ও জগতীশব্দ ক্রমে কথিত হইবে।

৬। পূর্ব্বোক্ত ধৃতি প্রভৃতি শব্দের পূর্ব্বে পৃথক্ পৃথক্ ধৃতি প্রভৃতি শব্দই দিতে হইবে। যেমন ধৃতি শব্দের পূর্ব্বে ধৃতি শব্দ, অষ্টি শব্দের পূর্ব্বে অষ্টি শব্দ, শক্করী শব্দের পূর্ব্বে শক্করী শব্দ ও জগতী শব্দের পূর্ব্বে জগতী শব্দ দেওয়া আবশ্যক।

सत्युत्तरेषां छन्दसामेता: संज्ञा: क्रमेण भवन्ति। तत्र षट्सप्तत्यक्षरं छन्दोऽतिधृति:। यथा ऋग्वेदे "सहिप्रर्धोनमारुतं तु विष्वणि (१) रप्नस्वतीषूर्वरा स्विष्टनि (२) रार्त्तनास्विष्टनि: (३) भादद्भ्यान्यादधि (४) यंशस्य केतुरर्हणा (५) अधस्मास्य हर्षतोहृषीवतो (६) विश्वे जुषन्त पन्थां (७) नर: शुभेन पन्थाम् (८)" द्वासप्तत्यक्षरं धृति:। यथा ऋग्वेदे—"अवर्धो इन्द्र दाहृहि श्रुधिन: (१) शुशोच हि द्यौ: क्षानभीषांअद्रिवो (२) घृणान्न भीषां अद्रिव: (३) शुष्मिन्तमोहिशुष्मिभि (४) र्वधैरुग्रै मिरीयसे (५) अपूरुषघ्नो अप्रतीतशूरसत्त्वभि (६) स्त्रिसप्तै: शूरसत्त्वभि: (७)॥" अष्टषष्ट्यक्षरमत्यष्टि:। यथा ऋग्वेदे—"अदर्शि गातुरुरवे वरीयसी (१) पन्था ऋतस्य समयंस्त रश्मिभि: (२) चक्षुर्भगस्य रश्मिभि: (३) द्युक्षं मित्रस्य सादन (४) मर्य्यम्णो वरुणस्य च (५) अथादधाते बृहदुक्थ्यं वय: (६) उपस्तुत्यं बृहद्वय: (७)॥" चतु:षष्ट्यक्षरमष्टि:। यथा ऋग्वेदे—"त्रिकद्रुकेषु महिषो यवाशिरंतुविशुष्म (१) स्तृपत्सोममपिबद्विष्णुना सुतं यथावशत्। (२) सईं ममाद महि कर्म्म कर्त्तवे महामुरुं (३) सैनं सश्चद्देवो देवं (४) सत्यमिन्द्रं सत्यइन्दु: (५)॥" षष्ट्यक्षरमति शक्वरी। यथा ऋग्वेदे—"साकं जात: क्रतुना साकमोजसा ववक्षिथ (१) साकं वृद्धोवीर्य्यै: सासहिर्मृधोविचर्षणि: (२)। दाताराधस्तुवते काम्यं वसुमै (३) नं सश्चद्देवो देवं (४) सत्यमिन्द्रं सत्य इन्दु: (५)॥" षट्पञ्चाशदक्षरा शक्वरी। यथा ऋग्वेदे—"प्रोष्वस्मै पुरोरथं (१) इन्द्राय शूषमर्च्चत (२) अभीकेचिदुलोककृत् (३) सङ्गे समत्सु वृत्रहा (४) अस्माकं बोधिचोदिता (५) नभन्तामन्यकेषाम् (६) ज्याका अधिधन्वसु (७)॥" द्विपञ्चाशदक्षरमतिजगती—

১। দ্বিতীয় ধৃতি প্রভৃতি শব্দ অর্থাৎ যষ্ঠ সূত্রোক্ত কথিত পূর্ব্বে ধৃতি প্রভৃতি শব্দ অতি শব্দের পরে প্রয়োগ করা হইবে। এই প্রকারে দ্বিতীয়, পঞ্চম, ষষ্ঠ ও সপ্তম সূত্র দ্বারা ক্রমিক সংজ্ঞা নির্দ্দিষ্ট হইল। যথা—৭৬ অক্ষর ছন্দের নাম "অতিধৃতি" ৭২ অক্ষর ছন্দের নাম "ধৃতি" ৬৮ অক্ষর ছন্দের নাম "অত্যষ্টি",

यथा मन्त्रब्राह्मणे—"मा ते गृहेषु निशि घोष उत्था—(१) दन्यत्र त्वद्रुदत्यः संविशन्तु (२)। मा त्वम् रुदत्युर मा वधिष्ठा (३) जीवपत्नी पतिलोके विराज (४) पश्यन्ती प्रजां सुमनस्यमानाम् (५)॥" अष्ट-चत्वारिंशदक्षरं जगती। यथा सामवेदे—"इमं स्तोममर्हते जात-वेदसे (१) रथमिव सम्महे मा मनीषया (२)। भद्रा हि नः प्रमतिरस्य संसदि (३) अग्ने सख्ये मा रिषा मा वयं तव (४)॥"

## अत्र लौकिकम्॥ ८॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। पूर्व्वेषां छन्दसां वैदिकत्व-मेव। इतः प्रभृत्यार्य्यादीनां चुलिकापर्य्यन्तानां लौकिकत्वमेव। समान्यादीनामुत्कृतिपर्य्यन्तानां वैदिकत्वं लौकिकत्वञ्च। अत्र वैदिक-च्छन्दसां प्रस्तावे प्रसङ्गात् वेदवदनादिमुनिपारम्पर्य्यागतं स्मृतिपुराणे-तिहासादिषु दृश्यमानमार्य्यादिदण्डकपर्य्यन्तं लौकिकं छन्दोजात-मधिक्रियते, तन्मूलत्वात् काव्यस्य। काव्यञ्च कीर्त्तिरूपत्वादानन्द-हेतुत्वाच्च पुरुषार्थः॥

## आत्रैष्टुभाच्च यदार्षम्॥ ९॥

आङभिविधौ। त्रिष्टुबेव त्रैष्टुभम्, स्वार्थे तद्धितः। अयमर्थः—गायत्र्यादित्रिष्टुप्पर्य्यन्तं यदार्षं छन्दोजातं वैदिके व्याख्यातम्, (क) लौकिके च तत्तथैव द्रष्टव्यम्। किं तदार्षम्? चतुर्विंशत्यक्षरा

৬৪ অক্ষর ছন্দের নাম "অষ্টি", ৬০ অক্ষর ছন্দের নাম "অতিশক্করী" ৫৬ অক্ষর ছন্দের নাম "শক্করী" ৫২ অক্ষর ছন্দের নাম "অতিজগতী" ও ৪৮ অক্ষর ছন্দের নাম "জগতী"।

৮। শাস্ত্র-শেষ-পর্য্যন্ত এই সূত্রটি অধিকার করা হইবে। অর্থাৎ এই সূত্র দ্বারা বক্ষ্যমাণ আর্য্যা প্রভৃতি ছন্দের লৌকিকত্ব বিহিত হইল এবং এই বিধান দ্বারা পূর্ব্বোক্ত গায়ত্রী প্রভৃতি ছন্দের বৈদিকত্ব জানা যাইবে।

৯। গায়ত্রী হইতে আরম্ভ করিয়া ত্রিষ্টুপ্ পর্য্যন্ত যে সমস্ত আর্য্যা ছন্দ কথিত হইয়াছে, (যেমন ২৪ অক্ষর গায়ত্রী, ২৮ অক্ষর উষ্ণিক্, ৩২ অক্ষর অনু-

(क) जगतीति सूत्रं पर्य्यासमायमत आर्षेट् भाविनाक्ष, पृथगुपादानप्रयोजनञ्च 'तोटकं च' इत्यादिषु बोद्धव्यम्।

गायत्री। अष्टाविंशत्यक्षरा उष्णिक्। द्वात्रिंशदक्षरा अनुष्टुप्। षट्‌त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंश-दक्षरा त्रिष्टुप्। चः समुच्चये॥

पादश्चतुर्भागः॥ १०॥

चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः 'पाद'संज्ञां लभते। गायत्र्याः षडक्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम्। समवृत्त-विषयमेतत्। (ख)

यथावृत्तसमाप्तिर्वा॥ ११॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः। वाशब्दो व्यवस्थितविभाषा। तेनोद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात्॥

आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम्।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम्॥
आर्य्यादुद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम्।
वैतालीयादिचूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम्।
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च॥

तत्रादौ तावदार्य्यालक्षणसिद्धार्थं गणसंज्ञां करोति—

ष्टुভ্, ৩৬ অক্ষর বৃহতী, ৪০ অক্ষর পঙ্‌ক্তি, ৪৪ অক্ষর ত্রিষ্টুভ্) বেদের ন্যায় লৌকিক ছন্দে তাহাদের ব্যবহার হইবে।

১০। প্রত্যেক ছন্দেরই চারিভাগের এক ভাগকে পাদ বলে। যেমন—চব্বিশ অক্ষর গায়ত্রীর ছয় অক্ষরে এক পাদ ইত্যাদি। এই সূত্রটি সমবৃত্তবিষয়ক।

১১। ন্যূনাধিক যত অক্ষর পাদ দ্বারা যে ছন্দের সমাপ্তি হয়, তত অক্ষরে সেই ছন্দের পাদ ধরিতে হইবে। উদ্গতাদি বিষমবৃত্তে চারিভাগের একভাগে পাদের ব্যবস্থা না হইয়া নির্দ্দিষ্ট অক্ষর দ্বারাই পাদের ব্যবস্থা করিতে হইবে

(ख) 'गायत्र्या वसवः' इति यदुक्तं तद्वैदिकमात्रविषयं, तेन लौकिकच्छन्दसां विषय-पद्धतयं विविधं, विषमवृत्तेऽपि लौकिकोक्ती विषमो भविष्यति नतु वैदिकोक्ती, किन्तु तत्रापि अनुपदमवधारणीय।

## लः समुद्रा गणः ॥ १२ ॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुःसंख्योपलक्षणार्थम्। चतुर्णां लकाराणां 'गणः' इत्येषा संज्ञा विधीयते॥

## गौ गन्तमध्यादिर्लश्च ॥ १३ ॥

अनेन गणस्य विन्यासभेदं दर्शयति। स हि गणः कदाचिद् गुरुद्वयेन ( ऽऽ ) भवति कदाचिदन्तेनैकेन गुरुणा, ( ।।ऽ ) कदाचिन्मध्यमेन, (।ऽ।) कदाचिदाद्येन, (ऽ।।) कदाचिच्चतुर्भिर्लघुभिः (।।।।)। षष्ठस्य भेदस्याभावाद् (१) विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद्गकारेण बहुव्रीहिः। द्वन्द्वात् परो यः श्रूयते, लभतेऽसौ प्रत्येकमभिसम्बन्धम्। द्वौ गकारौ ( ऽऽ ) चत्वारो लघवो (।।।।) भवन्ति, स एको (ऽऽ) गणः। गकारोऽन्ते यस्य स गन्तो द्वितीयो ( ।।ऽ ) गणः। गकारो मध्ये यस्य स गमध्यस्तृतीयो ( ।ऽ। ) गणः। गकार आदौ यस्य स गादिश्चतुर्थो (ऽ।।) गणः। लकारलकारौ मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो ( ।।।। ) गणः। एवं गणेषु सिद्धेषु इदानीमार्य्यालक्षणं करोति—

## स्वरा अर्द्धञ्चार्य्यार्द्धम् ॥ १४ ॥

गणग्रहणमनुवर्त्तते। स्वरा इति सप्तानां संज्ञा। यत्र प्रस्तारे

১২। চারিটি লঘুবর্ণের "গণ" সংজ্ঞা হয়। আর্য্যা লক্ষণসিদ্ধিই গণসংজ্ঞার প্রয়োজন।

১৩। সেই গণ কোন স্থলে দুইটি গুরুবর্ণ ( ऽऽ ) দ্বারা, কোন কোন স্থলে দুইটি লঘুবর্ণ ( ।। ) ও অন্তে একটি গুরুবর্ণ ( ऽ ) দ্বারা, কোন কোন স্থলে মধ্যবর্ত্তী একটি গুরুবর্ণ ও দুইটি লঘুবর্ণ ( ।ऽ। ) দ্বারা, কোন স্থলে আদি একটী গুরুবর্ণ ও দুইটি লঘুবর্ণ ( ऽ।। ) দ্বারা এবং কোন স্থলে চারিটি লঘুবর্ণ ( ।।।। ) দ্বারা-

---

(१) द्विगुरुकस्य (ऽऽ) गणस्यास्य मात्राप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्व्वगुर्व्वादिसर्व्वलघ्वन्ताः पञ्चैव भेदा भवन्ति। ते च भेदा द्विगुरुकाद् गणादेव क्रमशः ऽऽ, ।।ऽ, ।ऽ।, ऽ।।, ।।।।, एते पञ्च गणा जायन्ते। मुनिनाप्येते प्रस्तारक्रमेणैव पञ्चैव निष्पादिताः। अतोऽत्र षष्ठभेदस्याभाव इति भावः॥

गणाः सप्त भवन्ति, अर्द्धञ्च गणस्य, तदार्य्यार्द्धं निष्पद्यते। द्वितीयमप्यर्द्धं तादृशमेव। समप्रविभागेऽर्द्धशब्दः। यद्येवमर्द्धशब्दस्य 'अर्द्धं नपुंसक'मित्यनेनैकदेशिसमासे सति पूर्व्वनिपातः प्राप्नोति, यथा—अर्द्धाढ़कम्, अर्द्धपलम्, अर्द्धखारीति। नैष दोषः। सत्यपि समप्रविभागवचनत्वे सम्बन्धमात्रस्यात्र विवक्षितत्वात् (क) समप्रविभागवचनस्यार्द्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनाच्च (ख)। यथा—तुलार्द्धेन गां क्रीणाति।

पणार्द्धक्रीततताम्बूलचर्व्वणाद् गर्व्विताननाः।
अनभ्यासाद् गलल्लाला यान्त्येते वारयात्रिकाः॥

तथाचासमप्रविभागत्वेऽप्यर्द्धशब्दस्यैकदेशिसमासदर्शनाच्च। यथा—

अर्द्धचन्द्रं दधन्मूर्ध्नि पातु वः पार्व्वतीपतिः।
कालकूटविषं हन्तुं संगृहीतमिवामृतम्॥

अन्यच्च—

तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते॥

अथार्य्याया लक्षणं कुर्व्वाण एवं ज्ञापयत्याचार्य्यो यदार्य्यायामवान्तर-

বিভক্ত হইবে। (এরূপ বিরাম প্রভেদের কারণ নির্দ্দেশের জন্য প্রথম অধ্যায়ের ত্রয়োদশ সূত্র দেখ) ইহার অতিরিক্ত কোনও বিরামভেদের সম্ভাবনা না থাকায় স্পষ্টার্থই কহিতে হইল।

১৪। যে ছন্দে সাতটি গণ ও গণের অর্দ্ধ থাকে, সেই ছন্দ আর্য্যার্দ্ধরূপে

(क) यत्र समासस्यापि समप्रविभागद्योतकत्वं तत्र न एकदेशिसमासः, यथा अर्द्धाढ़कमित्यादयः। आर्य्यार्द्धमित्यादौ सम्बन्धमात्रं विवक्षितम्, आर्य्याया अर्द्धम् आर्य्यार्द्धमिति षष्ठीसमास इति भावः। यथोक्तं दुर्गेण—'पिप्पल्यर्द्धमिति षष्ठीसमासोऽपि दृश्यते।' एवञ्च 'अर्द्धं नपुंसक'मिति पाणिनीयसूत्रं न व्यापकम्। यदाह त्रिलोचनः—'अर्द्धाकारैकेतद्वचनं षष्ठीसमासोऽपि स्यादित्यत एवं'ति॥

(ख) व्यभिचारं दर्शयति—यथेति। दुर्गसिंहोऽपि—अयमर्द्धं कृष्णिकार्द्धमिति, असमप्रविभागेऽपि षष्ठीसमर्द्धं अरतीत्याह॥

पादव्यवस्था नास्ति। तेन 'द्वीपादन्यस्मा'दित्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात्। ( २ )

द्वीपादन्यस्मादपि, मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति, विधिरभिमतमभिमुखोभूतः (१) ॥

## अत्रायुङ् न ज् ॥ १५ ॥

अत्र आर्य्याच्छन्दसि, अयुग्गणाः, प्रथमस्तृतीयः पञ्चमः सप्तमश्च, न जगणो (।ऽ।) मध्ये गुरुर्न कर्त्तव्यः। शेषास्तु कामतोऽत्र भवन्ति ॥

## षष्ठो ज् ॥ १६ ॥

अत्रार्य्याच्छन्दसि षष्ठो जगणो मध्यगुरुरेव (।ऽ।) भवति। यथा—

१ २ ३ ४ ५ ६ ७ ग

S I I I I S S S S S I I S I S I I I I I S
सा जयति जगत्यार्य्या देवी दिवमुत्पतिष्णुरतिरुचिरा।

१ २ ३ ४ ५ ६ ७ ग

S S I I I I I I S S I I S S I S I I S
या दृश्यत गगनतले कंसवधोत्पातविद्युदिव ॥

## न्लौ वा ॥ १७ ॥

षष्ठ इत्यनुवर्त्तते। आर्य्यायाः षष्ठो गणः (।।।।) सर्व्वलघुर्व्वा भवति ॥

परिगणিত হয়। পিঙ্গলাচার্য্য আর্য্যাচ্ছন্দের লক্ষণদ্বারা জানাইয়াছেন যে, আর্য্যাতে অবান্তরপাদের ব্যবস্থা নাই।

১৫। আর্য্যাচ্ছন্দের প্রথম, তৃতীয়, পঞ্চম ও সপ্তমগণ মধ্যগুরু (।ऽ।) হইবে না।

১৬। আর্য্যাচ্ছন্দের ষষ্ঠগণ মধ্যগুরুই (।ऽ।) হইবে।

( २ ) अन्तादपि, घटयति, इत्यादावत्र भ्रमं कारस्य प्रति पादान्तत्वे 'गन्ते' (१।१०) इति गुरुत्वं भवेदिति भावः।

१ २ ३ ४ ५ ६ ७ग

S S I S I S S S S S S I I I I I I I I S

रूपान्तरेण देवीं तामेव स्तौमि सपदि किल मत्थिवः।

१ २ ३ ४ ५ ६ ७ग

S S S I I S I I S I I I I S I S S S

पादस्पर्शसुखादिव मीलितनयनोऽभवद्यस्याः॥

## नूलौ चेत् पदं द्वितीयादि ॥ १८ ॥

षष्ठो गणः ( IIII ) सर्व्वलघुश्चेद् भवति, तदा द्वितीयाक्षरादारभ्य पदं प्रवर्त्तते। पूर्व्वमेवोदाहरणम् ॥

## सप्तमः प्रथमादि ॥ १९ ॥

षष्ठे गणे मध्यगुरौ (ISI) सर्वलघौ ( IIII ) वा जाते सप्तमो गणः (IIII) सर्वलघुश्चेद् भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्त्तते ॥ (१) तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

S S S I I S S I S I S S I S I I I I I S

ब्रह्मण्यनन्तकु लीनः प्रलीनसामन्तचक्रनुतचरणः।

১৭। কোন স্থলে আর্য্যাচ্ছন্দের ষষ্ঠগণ সর্ব্বলঘুও ( IIII ) হইবে।

১৮। ষষ্ঠগণ সর্ব্বলঘু হইলে দ্বিতীয় অক্ষরাবধি পদ প্রবর্ত্তিত হইবে।

১৯। ষষ্ঠগণ মধ্যগুরু কিংবা সর্ব্বলঘু হইয়া সপ্তমগণ সর্ব্বলঘু হইলে প্রথম অক্ষরাবধি পদ প্রবর্ত্তিত হইবে।

(१) सप्तमगणस्य प्रथमाक्षरादारभ्य सुबन्तादिपदं प्रवर्त्तते ननु तत्र प्रथमाक्षरं कर्णविसर्गान्तं पूर्व्ववाक्यगत इति स्पष्टार्थः। यथास्य उदाहरणे 'तचर' इति षष्ठगणस्य मध्यगुरोरुदाहरणा-क्षरेभ्यः परभूतानां सप्तमगणोदाहरणभूतानां 'नुतचर' इति चतुर्णामक्षराणां प्रथमात् 'नु' इत्यक्षरात् सुबन्तादिपदप्रवृत्तिर्ज्ञाता। ननु तदक्षरं कर्णविसर्गान्तपतत्वं पूर्व्ववाक्यगम्। षष्ठ-मध्यगुरुत्वात् परतः सप्तमसर्वलघुगणयुक्तार्य्योदाहरणं—ब्रह्मण्येति। षष्ठसर्वलघुत्वात् परतः

१ २ ३ ४ ५ ६ ७ ग

I I I I I S I S S  S S  S S I S I I S

सकलसु जनैक पुत्त्रः श्रीमान् मुञ्ज चिरञ्जय ति ॥

१ २ ३ ४ ५ ६ ७ ग

I I I I I S I S  S S S I I I I I I I I I I I S

जयति भु वनैक वीरः मोरा युधतुलि तविपुलबलविभवः ।

१ २ ३ ४ ५ ६ ७ ग

I I I I  I S I I I I I  S I I  S S  I S S S

अनवर तवित्त वितरण निर्जित चम्पा धिपो मु ञ्जः ॥

## अन्त्ये पञ्चमः ॥ २० ॥

अन्ते भवमन्त्यम् दिगादित्वाद् यत्। अन्त्ये द्वितीयेऽर्द्धे पञ्चमश्चेद्-गणः (IIII) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्त्तते। तत्रोदा-हरणम्—

१ २ ३ ४ ५ ६ ७ ग

I I I I  S I I  S S I  I S I  I S I S I  S I  I S

स जयति वाक्पति राजः सकला र्थिमनोरथैक कल्पतरुः ।

१ २ ३ ४ ५ ६ ७ ग

S S I  S I  S I I  S S  I I I I I S I I S

प्रत्यर्थिभूत पार्थिव लक्ष्मी हठहर णदुर्ललि तः (४) ॥

२०। দ্বিতীয়ার্দ্ধে পঞ্চমগণ হইলে সর্ব্বলঘু ( IIII ) হইবে, প্রথম অক্ষর হইতে পদ প্রবর্ত্তিত হইবে।

---

सकलसर्वलघुचतुष्कार्य्योदाहरणं—जयतीति। अनयोर्मगणपरिमितदर्शनम् उत्तरार्द्धोक्तापरसेवको-परिहृतं वर्त्तते। तत्तु पूर्ववद् व्याख्येयम्॥

(४) यथा हठहरे हठहर इति पञ्चमस्य सर्वलघुत्वात् प्रथमादक्षरात् हकारादारभ्य पदोत्पत्तिः, न तु चतुर्थगणावयवीभूतादक्षरात्। अतः प्रथमादिपदप्रवृत्तिरितीयमार्या॥

## षष्ठश्च लू ॥ २१ ॥

अन्त्ये इत्यनुवर्त्तते। अन्त्ये द्वितीयेऽर्द्धे मध्यगुरौ ( ।ऽ। ) सर्व्वलघौ ( ।।।। ) वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते। पूर्व्वमेवोदाहरणम्।

## त्रिषु गणेषु पादः पथ्याद्ये च ॥ २२ ॥

चकारोऽन्त्य इत्यनुकर्षणार्थः। यस्या आर्य्याया अन्तेऽर्द्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्य्या 'पथ्या' नाम भवति। तद्यथा—

१ २ ३ ४ ५ ६ ७ ग

ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

पथ्या शो व्या यामो स्त्रोषु जि तात्मा नरो न रोगो स्यात्।

१ २ ३ ४ ५ ६ ७ ग

। । । । ऽ । । ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

यदि वच सा मन सा वा द्रुह्यति नित्यं न भूते भ्यः ॥

पादग्रहणं यत्युपलक्षणार्थम्।

## विपुलाऽन्या ॥ २३ ॥

यस्या आर्य्याया अन्तेऽर्द्धे आद्ये वोभयोर्व्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्य्या 'विपुला' नाम। सामान्येन विधानमेतत्। सा चाद्यन्तोभयपूर्वकत्वात्त्रिधा भवति। तत्रादिविपुला--

२१। দ্বিতীয়ার্দ্ধের ষষ্ঠগণ লঘু ( । ) হইবে। ১৬ ও ১৭ সূত্রদ্বারা মধ্যগুরু ও সর্ব্বলঘু প্রাপ্তিসত্ত্বে এই অপবাদ কথিত হইল।

২২। যাহার প্রথম ও শেষার্দ্ধে তিনগণে পাদ সমাপ্ত হইবে, সেই আর্য্যাকে "পথ্যা" কহে।

१ २ ३ ४ ५ ६ ७ग

S S S S S S I S I S S I I I I I S S

स्निग्धच्छायालावण्यलेपिनो किञ्चिदवनत-वीणा

१ २ ३ ४ ५ ६ ७ ग

I I I I S S S S I I S S S I S S S S

मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः ॥ ( १ )

अन्त्यविपुला—

१ २ ३ ४ ५ ६ ७ ग

S S I S I I I S S I I S S I S I S S S

चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः।

१ २ ३ ४ ५ ६ ७ ग

S S I S I S S I I I I I I S I I I I I S

नीवीविमोचनव्याजकथितजघना जघनविपुला ॥ ( २ )

उभयविपुला—

१ २ ३ ४ ५ ६ ७ ग

S S I I I I I I S I S I S S I S I S I I S

या स्त्री कुचकलशनितम्बमण्डले जायते महाविपुला।

( १ ) अत्र मुखे पादद्वये 'स्निग्ध' 'छाया' 'लाव' इति गणत्रयमुल्लङ्घ्य लावण्यशब्दपर्यन्तं पादो विश्राम्यति, अत इयं मुखविपुला नाम आर्या। उक्तलक्षणा मुखप्रागल्भ्यवती रमणी च मुखविपुला कथ्यते।

( २ ) अस्या जघने ( अन्त्ये ) अर्धद्वये 'निवी' 'विमोच' 'नव्या' इति गणत्रयात् परं चतुर्थगणाद्यक्षरे अकारे पादो विश्राम्यति, अत इयं जघनविपुला नाम आर्या ॥

१ २ ३ ४ ५ ६ ७ ग

S S I S I I I S I S I S I I I S I I S

गम्भीरनाभिरतिदीर्घलोचना भवति सा सुभगा ॥ (१)

अत्रोच्यते—पथ्याविपुलालक्षणयोः सहानवस्थालक्षणविरोधस्तेन मिश्रो भावो नास्ति। य एवांशो विपुलयाभिस्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति उभयाश्रयत्वात्। पथ्यालक्षणस्य विपुलायास्तदांशेनापि प्रवेशो दुर्लभः। ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वात् विपुला भवत्येव। पथ्याचपलयोश्च विरोधाभावाद्बाध्यबाधकभावो नास्ति। तत्रायं ग्रहः—

एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्य्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ॥
साकल्येनार्य्याणामशीतिरेवं विकल्पाः स्युः ॥

तेषामनुक्तोदाहरणान्यूह्यानि ॥ (क)

## चपला द्वितीयचतुर्थौ ग् मध्ये जौ ॥ २४ ॥

अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरू (। S।) भवतः, प्रथमश्चान्त्यगुरुः (।।S), तृतीयो द्विगुरुः, (SS), पञ्चमश्चादिगुरुः

২৩। যে আর্য্যার প্রথমার্দ্ধে বা শেষার্দ্ধে বা উভয়ার্দ্ধে তিন গণে পাদসমাপ্তি না হয় সেই আর্য্যাকে "বিপুলা" বলে। সেই বিপুলা আদ্যন্তোভয়ার্দ্ধপূর্ব্বকত্ব-নিবন্ধন আদিবিপুলা অন্ত্যবিপুলা, ও উভয়বিপুলাভেদে তিন প্রকার। উদাহরণ বৃত্তিতে দেখিতে পাইবে।

(१) अत्रा उभयोरर्द्धयोर्गणत्रयान्ते 'या सौ' 'कुचकल' सनिल' इत्यत्र 'वरौ' 'रस्यादि' 'रतिदी' इत्यत्र च पादो विश्राम्यति, अत इयं महाविपुला नाम आर्या। कुचादिचक्रयुता नारी च महाविपुला उच्यते॥

(ऽ। ) शेषं यथाप्राप्तम्। एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सा आर्य्या 'चपला' नाम। उदाहरणमग्रतः॥

## पूर्व्वे मुखपूर्व्वा॥ २५॥

पूर्व्वार्द्धे चपलालक्षणं चेद् भवति, तदा सा आर्य्या 'मुखचपला' नाम॥ पथ्यापूर्व्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ

अतिदारुणा द्विजिह्वा परस्य रन्ध्रानुसारिणी कुटिला।

१ २ ३ ४ ५ ६ ७ ग

ऽ ऽ । । । । ऽ ऽ ऽ ऽ ऽ ऽ । । । । । ऽ

दूरात् परिहरणीया नारी नागीव मुखचपला॥

आदिविपुलापूर्व्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

यस्यास्य लोचने पिङ्गले भ्रुवौ सङ्गते मुखं दीर्घम्।

१ २ ३ ४ ५ ६ ७ ग

। । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । । । । । ऽ

विपुलोन्नतास्य दन्ताः कान्ताऽसौ भवति मुखचपला॥

२४। যে আর্য্যা-ছন্দের দ্বিতীয় ও চতুর্থগণ দুইটী গুরুবর্ণের মধ্যবর্ত্তী হইয়া মধ্যগুরু (।ऽ।) হয়, সেই আর্য্যাকে "চপলা" বলে। এইটী অধিকার সূত্র।

২৫। পূর্ব্বভাগে চপলালক্ষণ থাকিলে সেই আর্য্যাকে "মুখচপলা" বলে।

उभयविपुलापूर्व्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

I I S I S I SS ISISS ISISSI

विपुलाभिजातवंशोद्भवापि रूपातिरेकरम्यापि।

१ २ ३ ४ ५ ६ ७ग

S S I S I S S I S I I I I I I I I I I S

निःसार्य्यते गृहाद्धन्यापि यदि भवति मुखचपला॥

**जघनपूर्वेतरत॥ २६॥**

द्वितीयेऽर्द्धे चपलालक्षणश्चेद्भवति, सा आर्य्या 'जघनचपला' नाम॥ तत्र पथ्यापूर्व्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

SSSI ISS SI I I ISI SIS SI

यत्पादस्य कनिष्ठा न स्पृशति महीमनामिका वापि।

१ २ ३ ४ ५ ६ ७ग

S S I S I S S ISISS I I I I I S

सा सर्व्वधूर्त्तभोग्या भवेदवश्यं जघनचपला॥

मध्यविपुलापूर्व्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

SS SS SS ISI SS IS IS SS

यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा।

२७। দ্বিতীয়ার্দ্ধে চপলা লক্ষণ থাকিলে, সেই আর্য্যাকে "জঘনচপলা" বলে।

१ २ ३ ४ ५ ६ ७ग

I I S I S I S S I S I S I I I I I I S S

विपुले कुले प्रसूतापि सा भुवं जघनचपला स्यात् ॥

महाविपुलापूर्व्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

I I S I I S I I S I S I S I I I S I S S S

मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः।

१ २ ३ ४ ५ ६ ७ग

I I S I S I S S I S I S I I I I I I S S

विपुलान्वयाभिजातापि जायते जघनचपलासौ।

**उभयोर्म्महाचपला ॥ २७ ॥**

यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या 'महाचपला' नाम ॥ तत्र पथ्यापूर्व्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

I I S I S I S S I S I S S I S I S S S

हृदयं हरन्ति नार्य्यो मुनेरपि भ्रूकटाक्षविक्षेपैः।

१ २ ३ ४ ५ ६ ७ग

S S I S I S S I S I S S I S I I S

दोर्मूलनाभिदेशं निदर्शयन्त्यो महाचपलाः।

विपुलापूर्व्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

I I S I S I S S I S I S S I S I S S S

चिबुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः।

१ २ ३ ४ ५ ६ ७ ग

। । S । S । S S । S । S S । S । । S

विपुलान्वयप्रसूतापि जायते सा महाचपला ॥

## आर्य्यार्द्धसमा गीतिः ॥ २८ ॥

आर्य्येणार्द्धेन सममन्यमर्द्धं यस्याः सा आर्य्यार्द्धसमा, मध्यमपदलोपी समासः। एतदुक्तं भवति—द्वितीयेऽप्यर्द्धे षष्ठो गणो जकारो ( ।S। ) नृलौ वा ( ॥ ॥ ) कर्त्तव्यः ॥ तत्र पथ्यागीतेरुदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

। । S S S । । S S । । । । S । S । S S S

मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः।

१ २ ३ ४ ५ ६ ७ ग

S S S । । S S । । S । । S । S । S । । ।

गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति ॥

आदिविपुलागीतेरुदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

। । । । S । । S S । S । S S । S । । । S S

इयमपरा विपुला गीतिरुच्यते सर्व्वलोकहितहेतोः।

१ २ ३ ४ ५ ६ ७ ग

। । S । S । S S । S । । । S । S । S S S

यदनिष्टमात्मनस्तत् परेषु भवतापि मा स्म कार्षित् कारि ॥

२१। যে ছন্দের উত্তরার্দ্ধে চপলালক্ষণ লক্ষিত হয়, সেই আর্য্যাকে "মহাচপলা" বলে।

पथ्यामहाचपलागीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

SSISI SSISISSISIIISS

कामस्थकास्ति गीतिर्मगीदृशां सीधुपानचपलानाम् ॥

१ २ ३ ४ ५ ६ ७ग

IISISISS IS I SS IIIIIISS

सुरतश्च मुक्तलज्जं निरर्गलोल्लापमधितरमणीयम् ॥

महाविपुलामहाचपलागीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

SSISISSISISSIIIIIIIS

पञ्चेषु वल्लभः पञ्चमध्वनिरत्र भवति यदि विपुलः ।

१ २ ३ ४ ५ ६ ७ग

IISISI SSIS IS SISISSS

चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः ।

## अन्त्यानोपगीतिः ॥ २८ ॥

अन्त्ये नार्द्धेन सममाद्यमर्द्धं यस्याः, सा आर्य्या 'उपगीतिर्नाम ॥—

तत्र पथ्योपगीतुग्रदाहरणम्—

१ २ ३ ४ ५ ६ ७ग

SSSI ISIISSSS ISIIS

गान्धर्व्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि ।

१ २ ३ ४ ५ ६ ७ग

IIIISI ISII IISSS ISSS

इति समवेत्य मुमुक्षुभिरुपगीतिस्त्यज्यते दूरः ॥

২৮। যে ছন্দের শেষার্দ্ধ প্রথমার্দ্ধের তুল্য অর্থাৎ যাহার দ্বিতীয়ার্দ্ধেও ষষ্ঠগণ মধ্যগুরু বা সর্ব্বলঘু, সেই আর্য্যাকে "গীতি" বলে।

महाविपुलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

I I S I S I S S I I I I S I I I S S S

विपुलोपगीतिझंकारमुखरिते भ्रमरमालानाम् ।

१ २ ३ ४ ५ ६ ७ ग

S I I S I I S S I S I I I S I S S S

रैवतकोपवने वसुमस्तु सततं मम प्रीतिः ॥

पथ्यामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

I I S I S I S S I S I S S I S I I S

विषयामिषाभिलाषः करोति चित्तं सदा चपलम् ।

१ २ ३ ४ ५ ६ ७ ग

S S I S I S S I S I S S I S S S

वैराग्यभावनानां तथोपगीत्या भवेत् स्वस्थम् ॥

महाविपुलामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ग

I I S I S I S S I S I S S I S S S

विपुलोपगीति सन्त्यज्यतामिदं स्थानकं भिक्षो ।

१ २ ३ ४ ५ ६ ७ ग

I I S I S I S S I S I S S I S S S

विषयाभिलाषदोषैर्न बाध्यते चञ्चलं चेतः ॥

২৯। যে ছন্দের প্রথমার্দ্ধ শেষার্দ্ধের তুল্য অর্থাৎ যাহার প্রথমার্দ্ধেও ষষ্ঠগণ এক-লঘু সেই আর্য্যাকে "উপগীতি" বলে।

## द्रुतमध्या भौ भ्गौ ग् न्जौ ज्यौ ॥ ३३ ॥

यस्य प्रथमे पादे त्रयो भकारा गकारौ च द्वितीये नकारजकारौ जकारयकारौ च, तद् 'द्रुतमध्या' नाम वृत्तम्। अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ। तत्रोदाहरणम्—

भ भ भ ग ग न ज ज य

S I I S I I S I I S S I I I I S I I S I I S S

यद्यपि शीघ्रगतिर्मृदुगामी बहुधनवानपि दुःखमुपैति।
नातिशयत्वरिता न च मन्दा, नृपतिगतिः कथिता द्रुतमध्या॥

## वेगवती सौ स्गौ भौ भ्गौ ग् ॥ ३४ ॥

यस्य प्रथमे पादे त्रयः सकारा गकारश्चैकः, द्वितीये भकारास्त्रयो गकारौ च भवतस्तद् 'वेगवती' नाम वृत्तम्। तत्रोदाहरणम्—

स स स ग भ भ भ ग ग

I I S I I S I I S S S I I S I I S I I S S

तव भुजगाधिप सेनां, वेगवतीं महति समरेषु।
प्रलयोर्मिमिवाभिमुखीं तां कः सकलक्षितिभृन्निवहेषु॥

৩৩। যাহার প্রথম পাদে যথাক্রমে তিনটী ভগণ ও দুইটী গুরুবর্ণ দ্বারা মোট ১১ অক্ষর, দ্বিতীয় পাদে নগণ, দুইটী জগণ ও যগণ দ্বারা মোট ১২ অক্ষর, এবং পূর্ব্ববৎ তৃতীয় পাদ প্রথম পাদের ও চতুর্থপাদ দ্বিতীয় পাদের লক্ষণাক্রান্ত, তাহাকে "দ্রুতমধ্যা" নামক বৃত্ত বলে।

৩৪। যে ছন্দের প্রথম পাদে তিনটী সগণ ও একটী দীর্ঘবর্ণ, দ্বিতীয় পাদে তিনটী ভগণ ও দুইটী দীর্ঘবর্ণ থাকে এবং পূর্ব্বের ন্যায় তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণসমন্বিত হয়, তাহাকে "বেগবতী" নামক ছন্দ বলে।

## भद्रविराट् तजौ रगौ मसौ जगौ ग् ॥ ३५ ॥

यस्य प्रथमे पादे तकारजकारौ रेफगकारौ च, द्वितीये मकारसकारजकारा गकारौ च, तद् 'भद्रविराट्' नाम वृत्तम्। तत्रोदाहरणम्—

त ज र ग म स ज ग ग

ऽऽ।।ऽ।ऽ।ऽ।ऽ ऽ ऽऽऽ ।।ऽ।ऽ।ऽऽ

यत्पादतले चक्रास्ति चक्रं, हस्ते वा कुलिशं सरोरुहं वा।
राजा जगदेकचक्रवर्त्ती, स्याच्छ्री भद्रविराट् समस्तुतेऽसौ ॥

अस्योपच्छन्दसिकान्तःपातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः ॥

## केतुमती सजौ सगौ भरौ नगौ ग् ॥ ३६ ॥

यस्य प्रथमे पादे सकारजकारौ सकारगकारौ च द्वितीये भकाररेफनकारा गकारौ च, तत् 'केतुमती' नाम वृत्तम्। तत्रोदाहरणम्—

स ज स ग भ र न ग ग

।।ऽ।ऽ।।।ऽऽ ऽ।।ऽ।ऽ।।।ऽऽ

हतभूरिभूमिपतिचिह्नां, युद्धमहस्तलब्धजयलक्ष्मीम्।
सहते न कोऽपि वसुधायां केतुमतीं नरेन्द्र तव सेनाम् ॥

৩৫। যে ছন্দের প্রথমপাদে যথাক্রমে তগণ, জগণ, রগণ ও একটী দীর্ঘবর্ণ, দ্বিতীয়পাদে মগণ, সগণ, জগণ ও দুইটী দীর্ঘবর্ণ থাকে এবং পূর্ব্বের ন্যায় তৃতীয় পাদ প্রথম পাদের ও চতুর্থপাদ দ্বিতীয় পাদের লক্ষণসমন্বিত হয়, তাহাকে "ভদ্রবিরাট্" নামক ছন্দ বলে।

৩৬। যে ছন্দের প্রথমপাদে যথাসংখ্য সগণ, জগণ, সগণ ও একটী দীর্ঘবর্ণ দ্বিতীয়পাদে ভগণ, রগণ, নগণ ও দুইটী দীর্ঘবর্ণ থাকে এবং পূর্ব্বের ন্যায় তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণান্বিত হয়, তাহাকে "কেতুমতী" নামক ছন্দ বলে।

## आख्यानिकी तौ ज्गौ ग् ज्तौ ज्गौ ग् ॥ ३७ ॥

यस्य प्रथमे पादे तकारौ जकारौ गकारौ च, द्वितीये जकार-तकारौ जकारो गकारौ च, 'तदाख्यानिकी' नाम वृत्तम्। तत्रोदाहरणम्—

त त ज ग ग ज त ज ग ग

ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ । ऽ ऽ

भृङ्गावलीमङ्गलगीतनादै र्जनस्य चित्ते मुदमादधाति।
आख्यानिकी च स्मरजन्मपाथ मद्दोत्सवस्याश्रवणा क्वणन्ती ॥

आख्यानिकी वार्त्ताहारिकोच्यते ॥

## विपरीताख्यानिकी ज्तौ ज्गौ ग, तौ ज्गौ ग् ॥ ३८ ॥

यस्य प्रथमे पादे जकारतकारौ जकारो गकारौ च, द्वितीये तकारौ जकारो गकारौ च, 'तद्विपरीताख्यानिकी' नाम वृत्तम्।

ज त ज ग ग त त ज ग ग

। ऽ । ऽ ऽ । । ऽ । ऽ ऽ ऽ ऽ । ऽ ऽ । । ऽ । ऽ ऽ

मर्म तवालीकवचोभिरेभिः स्वार्थे प्रिये साधय कार्य्यमन्यत्।
कथं कथावर्णनकौतुकं स्यादाख्यानिकी चेद्विपरीतवृत्तिः ॥

एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थं मर्त्रसमाधिकारे पाठः।

৩৭। যে ছন্দের প্রথম পাদে যথাক্রমে দুইটী তগণ জগণ ও দুইটী দীর্ঘবর্ণ; দ্বিতীয় পাদে জগণ, তগণ, জগণ দুইটী দীর্ঘবর্ণ থাকে এবং তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের লক্ষণান্বিত হয়, তাহাকে "আখ্যানিকী" নামক ছন্দ বলে

**हरिणप्लुता सौ स्लौ ग् न्भौ भ्रौ ॥ ३९ ॥**

यस्य प्रथमे पादे सकारास्त्रयो लकारगकारौ च, द्वितीये नकार-भकारौ भकाररेफौ च, तद्वृत्तं 'हरिणप्लुता' नाम। तत्रोदाहरणम्—

स स स ल ग न भ भ र

I I S I I S I I S I S   I I I S I I S I I S I S

तव मृधे नराधिप विद्विषां, भयविवर्जितकेतुलघीयसाम्।
रणभूमिपराङ्मुखवर्त्मनां, भवति शीघ्रगतिर्हरिणप्लुता॥

**अपरवक्त्रं नौ र्लौ ग् न्जौ ज्रौ ॥ ४० ॥**

यस्य प्रथमे पादे नकारौ रेफलकारगकाराश्च, द्वितीये नकारजकारौ जकाररेफौ च, तद्वृत्तं 'अपरवक्त्रं' नाम। तत्रोदाहरणम्—

न न र ल ग न ज ज र

I I I I I I S I S I S   I I I I S I I S I S I S

सकृदपि कृपणेन चक्षुषा नरवर पश्यति यस्य चाननम्।
न पुनरपरवक्त्रमीक्षते, स हि सुखितोऽपि जनस्तथाविधः॥
अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः॥

৩৮। যে ছন্দের প্রথম পাদে ক্রমশঃ জগণ, তগণ, জগণ ও দুইটী দীর্ঘবর্ণ, দ্বিতীয় পাদে দুইটী তগণ, জগণ ও দুইটী দীর্ঘবর্ণ থাকে এবং তৃতীয় পাদ প্রথম পাদের ও চতুর্থপাদ দ্বিতীয় পাদের লক্ষণান্বিত হয়, তাহাকে "বিপরীতাখ্যানিকী" বলে। এই দুইটী ছন্দ বক্ষ্যমাণ উপজাতির অন্তর্গত হইলেও বিশেষ সংজ্ঞার নিমিত্ত অত্র সমাধিকারেই পাঠ করা ছন্দোবিদ্গণের অভিপ্রেত।

৩৯। যে ছন্দের প্রথম পাদে ক্রমশঃ তিনটী সগণ একটী হ্রস্ববর্ণ ও একটী গুরুবর্ণ, দ্বিতীয়পাদে একটী নগণ, দুইটী ভগণ ও একটী রগণ থাকে এবং তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের সমান লক্ষণান্বিত হয়, তাহাকে "হরিণপ্লুতা" বৃত্ত বলে।

## पुष्पिताग्रा नौ र्यौ न्जौ ज्रौ ग् ॥ ४१ ॥

यस्य प्रथमे पादे नकारौ रेफयकारौ च, द्वितीये नकारजकारौ जकाररेफौ गकारश्च, तद् वृत्तं 'पुष्पिताग्रा' नाम। तत्रोदाहरणम्—

न न र य   न ज ज र ग

I I I I I I S I S I S S   I I I I S I I S I S I S S

सस्मितदशना मृगायताक्षी, स्मितसुभगा प्रियवादिनी विदग्धा।
अपहरति नृणां मनांसि रामा, भ्रमरकुलानि लतेव पुष्पिताग्रा॥
इयमप्यौपच्छन्दसिकान्तर्गता विशेषसंज्ञाज्ञापनार्थं सतोच्यते॥

## यवमती र्जौ र्जौ ज्रौ ज्रौ ग् ॥ ४२ ॥

यस्य प्रथमे पादे रेफजकारौ भूयोऽपि रेफजकारौ भवतः, द्वितीये जकाररेफौ पुनर्जकाररेफौ गकारश्च, तद् वृत्तं 'यवमती' नाम। अत्र सम्प्रदायात् पादव्यवस्था। तत्रोदाहरणम्—

र ज र ज ज र ज र ग

S I S I S I S I S I S I I S I S I S I S I S I S I S S

पद्मकान्तु कोमले करे विभाति प्रशस्तमत्स्यलाञ्छनं पदे च यस्याः।
सा यवान्विता भवेद्धनाधिका च समस्तबन्धुपूजिता प्रिया च पत्युः॥
यवान्विता यवमतीत्यर्थः॥

৪০। যে ছন্দের প্রথম পাদে ক্রমশঃ নগণদ্বয়, রগণ, একটী হ্রস্ববর্ণ ও একটী দীর্ঘবর্ণ, দ্বিতীয় পাদে নগণ, দুইটি জগণ ও একটী রগণ থাকে এবং তৃতীয়পাদ প্রথম পাদের ও চতুর্থ পাদ দ্বিতীয় পাদের সমলক্ষণান্বিত হয়, তাহাকে "অপরবক্ত্র" নামক ছন্দ বলে। এই ছন্দ বৈতালীয়ের মধ্যে পঠিত হইলেও বিশেষ সংজ্ঞার জন্য এই প্রকরণে পাঠ করা হইল

৪১। যে ছন্দের প্রথম পাদে ক্রমশঃ নগণদ্বয়, রগণ ও যগণ, দ্বিতীয়পাদে নগণ, দুইটী জগণ, একটী রগণ ও একটী দীর্ঘবর্ণ থাকে এবং তৃতীয়পাদ প্রথমপাদের

## शिखैकोनत्रिंशदन्ते ग् ॥ ४३ ॥

यस्य प्रथमे पादे एकोनत्रिंशदक्षराणि भवन्ति, द्वितीये चैकत्रिंशत्, द्वयोरपि पादयोरन्ते प्रत्येकं गुरुः ; तद् वृत्तं 'शिखा' नाम। 'अर्द्धे' इत्यधिकाराद्द्वितीयमप्यर्द्धं तादृशमेव। 'अन्तेग्' इति नियमार्थमेतत्। अन्त एव गुरुर्नान्यत्र। तेनायुक् पादे ( १,३ ) अष्टाविंशतिर्लघवोऽन्ते गुरुरेकः। युक्पादे ( २,४ ) त्रिंशल्लघवोऽन्ते गुरुश्चैकः। तत्रोदाहरणम् —

अभिमतबकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ,
सहचरमलयपवनचयनललितसरसिजरजसि श्रयतरणिवितते।
विकसितविविधकुसुमसुलभसुरभिशरमदननिहतसकलजने,
ज्वलयति मम हृदयमविरतमिह सुतनु तव विरहदहनविषमशिखा ॥

## खञ्जा महत्ययुजीति ॥ ४४ ॥

इयमेव शिखा पूर्वोक्ता महति बह्वक्षरे पादे अयुजि ( १,३ ) सति पारिशेष्यादितरस्मिंश्च युजि ( २,४ ) सति 'खञ्जा, नाम छन्दो

চতুর্থপাদ ২য় পাদের সমলক্ষণান্বিত, তাহাকে "পুষ্পিতাগ্রা" বলে। উক্ত ছন্দ 'ঔপচ্ছন্দসিকে'র অন্তর্গত হইলেও বিশেষ সংজ্ঞাজ্ঞাপনার্থ এই প্রকরণে পাঠ করা হইল।

৪২। যে ছন্দের প্রথম পাদে ক্রমশঃ রগণ, জগণ, পুনর্ব্বারও রগণ এবং জগণ; ২য় পাদে জগণ, রগণ, পুনর্ব্বার জগণ ও একটী দীর্ঘবর্ণ থাকে এবং তৃতীয় পাদ প্রথম পাদের ও ৪র্থ পাদ ২য় পাদের সমলক্ষণান্বিত, তাহাকে "যবমতী" নামক ছন্দ বলে।

৪৩। যে ছন্দের প্রথমপাদে পূর্ব্ব অষ্টাবিংশতি অক্ষর লঘু ও শেষ একটি গুরু, মোট ২৯ বর্ণ; ২য় পাদে ত্রিশটী লঘুবর্ণ ও শেষটী গুরু, মোট ৩১ বর্ণ; অধিকন্তু তৃতীয় পাদ প্রথম পাদের ও চতুর্থ পাদ ২য় পাদের সমলক্ষণান্বিত, তাহাকে "শিখা" নামক বৃত্ত বলে।

भवति। अयमर्थः,—एकत्रिंशदक्षरो विषमः पादः कर्त्तव्यः, एकोनत्रिंशदक्षरश्च समः पादः। शेषं यथाप्राप्तमेव। यथा—

अपगतघनविशददशदिशि हृतजनहृदि परिणतकणकपिलकलमे,
प्रविकसितसमकुसुमभरपरिमलसुरभितमरुति शरदि समये।
शुचिशशिमहसि विहृतमरसिकहि मुदितमधुलिहि विमलितधरणितले
किमपरमिह कमलमुखि सुखमनुभवति मम हृदयकमलमधुना॥

अर्द्धसमवृत्ताधिकारो निवृत्तः।

इति भट्टहलायुधकृतायां छन्दोवृत्तौ पञ्चमोऽध्यायः॥ ५॥

---

৪৪। যে ছন্দের প্রথম ও তৃতীয় পাদে শিখাছন্দোক্ত একত্রিংশৎ বর্ণ এবং দ্বিতীয় ও চতুর্থ পাদে ঐ ছন্দোক্ত ঊনত্রিংশৎ বর্ণ থাকে, তাহাকে "খঞ্জা" নামক ছন্দ বলে।

( অর্দ্ধসম বৃত্তাধিকার সমাপ্ত। )



# षष्ठोऽध्यायः ।



## यतिर्विच्छेदः ॥ १ ॥

विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति विच्छेदो विश्रामस्थानम्, स च यतिरित्युच्यते । नन्वत्र शास्त्रे 'यति'शब्देन व्यवहारादशेषाविरर्थकं संज्ञाकरणम् ? नैष दोषः । 'यति' रिति अनादि- (आगमादिषु) राचार्य्यपारम्पर्य्यागता संज्ञेयं तनुमध्यादिवत् । तस्याः शिष्यत्वात् पर्य्यर्थकथनं 'यतिर्विच्छेद' इति । अस्ति च लोके शास्त्रान्तरेषु च यतिसंज्ञाव्यवहारः । अपि च 'यति'रित्यधिकार आसमसमाध्यायपरिसमाप्तेः समुद्रेन्द्रियरसादिनिर्देशेषूपतिष्ठते । समुद्रादिशब्दाः साकाङ्क्षत्वाद् यतिरित्यनेनैव सम्बध्यन्ते । यतिशब्दस्याधिकरणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्त्तव्या इत्यर्थः सिध्यति । अत्रैषा यत्युपदेशोपनिषद्भवति ।

"यतिः सर्व्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः ।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्व्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्व्वान्तवत् स्वरसन्धौ क्वचिदेव परादिवत् ।
द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत् ॥
नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसम्बन्धाः प्रादयश्च परादिवत् ॥"

"यतिः सर्व्वत्र पादान्ते" इत्यस्योदाहरणम्—'विशुद्धज्ञानदेहाय' इत्यादि ॥

प्रत्युदाहरणञ्च यथा—

'नमस्तस्मै महादेवाय शशाङ्कार्द्धधारिणे ।' इत्येवमादि ।

"श्लोकार्द्धे तु विशेषतः" इत्यत्र सन्धिकार्य्याभावात् स्पष्टविभक्तिकत्वञ्च विशेषः * । तत्रोदाहरणम्—

"नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥"

अत्र ईश्वराख्यमित्यस्य पूर्व्वमकारेण सह संयोगो न कर्त्तव्यः । समासे प्रत्युदाहरणम्—

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी ।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ।'

"समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ।" तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम् । समासान्तर्भूतविभक्त्यन्तमव्यक्तविभक्तिकम् । तत्रोदाहरणम्—

'यस्याश्चक्रे जनकतनयास्नानपुण्योदकेषु' इत्यादि ।

"व्यक्ताव्यक्तविभक्तिके" इति 'यतिः सर्वत्र पादान्ते' इत्यनेनापि सम्बध्यते । तत्रोदाहरणम् —

'वशीकृतजगत्कालं कण्ठे कालं नमाम्यहम् ।
महाकालं कलाशेषशशिलेखाशिखामणिम् ॥' अपि च—
'नमस्तुङ्गशिरश्चुम्बि—चन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भ—मूलस्तम्भाय शम्भवे ॥'
"क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदिपूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥" तत्रोदाहरणम्—

* स्पष्टविभक्तिकत्वञ्च समासान्तर्गतविभक्तिकभिन्नत्वं इति विवृतिविभक्त्यन्तत्वं, तेन 'इत्यवाच्य, इति सूत्रेऽपि स्पष्टविभक्तिकत्वमवगन्तव्यम् ।

'पर्य्याप्तं तप्तचामी—करकटकतटे श्लिष्टशीतेतरांशौ' इत्यादि। तथा—'कूजत्कोयष्टिकोला—हलमुखरभुवः प्रान्तकान्तारदेशाः।' इत्यादि। तथा—'हासो हस्ताग्रसंवा,—हनमपि तुलिता,—द्रीन्द्र-सारद्विपोऽसौ।' इत्यादि। तथा—'वैरिञ्चानां तथोच्चा,—रितरुचिर-ऋचामाननानाञ्चतुर्णाम्' इत्यादि। तथा—'खड्गं पानीयमाला-टयति च महिषं पक्षपाती पृथक्कः।' इत्यादि। समुद्रादाविति किम्? पदमध्ये यतिः पादान्ते मा भूत्। तद्यथा—'प्रण-मत भवबन्धक्लेशनाशाय नारा—यणचरणसरोजद्वन्द्वमानन्दहेतुम्।' इत्यादि।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु (पदमध्ये) यतिर्दुष्यति *। यथा—

'एतस्या ग,—ण्डतलममलं गाहते चन्द्रकक्षा'मित्यादि। "एतस्या ग,—ञ्जति सुमुखमिदं पूर्णचन्द्रप्रकाश" मित्यादि। तथा—"सुरासुर-शिरोनिघृ,—ष्टचरणारविन्दः शिवः" इत्यादि।

"पूर्व्वान्तवत् स्वरसन्धौ क्वचिदेव परादिवत्।" अस्यार्थः—योऽयं पूर्व्वपरयोरेकादेशः स्वरसन्धौ विधीयते स क्वचित् पूर्व्व-स्यान्तवद्भवति, क्वचित् परस्यादिवत्। तथाच पाणिनेः स्मरणम्—'अन्तादिवच्चे'ति ( पा०६।१।८५ )। तत्र पूर्वान्तवद्भावे उदाहरणम्—

'स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा'। 'जम्भारातीभकुम्भो-द्भवमिव दधतः' इत्यादि। तथा—

'दिक्कालाद्यनवच्छिन्ना,—नन्तचिन्मात्रमूर्त्तये।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे॥' इत्यादि।

परादिवद्भावे उदाहरणम्—

'स्कन्धं विन्ध्याद्रिबुद्ध्या निकषति महिष—स्याहितोऽसूनजानीत्।' इत्यादि।

---

* पूर्व्वेति। यत्र पूर्व्वापरभागयोर्मध्यवर्त्तिनि सन्ध्या विवक्षणात् पदम्, एकम् अक्षरं यत्र तस्य भावः एकाक्षरत्वं तस्मिन् सतीत्यर्थः। अयं भावः—यद्यपि पदमध्ये यतिर्निषिद्धा तथापि क्वचित् पदस्यैकमक्षरं निषेध्य परस्मिन् यतिपद-जन्यतया निवेशे यतिभङ्गो भवेदित्यर्थः।

'शूले शृण्वन्तु गाढं प्रहर हरवृषो—केयूरकेयोऽपि वक्रश्चक्र-चाकारि किं ते'—इत्यादि।

तत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद्-भवति। "यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ" इत्यन्तादि-वद्भावविधावपि सम्बध्यते। तेन 'अस्या वक्त्राब्जमवजित पूर्णेन्दुशोभं विभातो' त्येवंविधा यतिर्न भवति॥

'यणादेशः परादिव'दित्यस्योदाहरणम्—

'विततघनतुषारक्षोदशुभ्रांशु-पूर्वा-स्वविरलपटमालां श्यामलामुल्लि-खन्त' इत्यादि।

"नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत्।" तेभ्यः पूर्वा यतिर्न कर्त्तव्येत्यर्थः। तत्रोदाहरणम्—

'स्वादु स्वच्छं सलिलमपि च, प्रार्थये कस्य न स्या' दित्यादि।

नित्यं प्राक्पदसम्बन्धा इति किम्? अन्येषां * पूर्वपदान्तवद्भावो मा भूत्। तद्यथा—

'मन्दायन्ते न खलु सुहृदा,—मभ्युपेतार्थकृत्या' इत्यादि। यथा—

'इत्यौत्सुक्या, दपरिगणयन् गुह्यकस्तं ययाचे' इत्यादि।

"परेण नित्यसम्बन्धाः प्रादयश्च परादिवत्।" तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्—

'दुःखं मे प्र—क्षिपति हृदये दुःसहस्त्वद्वियोग' इत्यादि।

परेण नित्यसम्बन्धा इति किम्? कर्म्मप्रवचनीयेभ्यः परोऽपि यतिर्यथा स्यादिति। तत्रोदाहरणम्—

'प्रियं प्रति स्फुरत्पादे मन्दायन्ते नखत्विषि।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि॥' इत्यादि॥

---

* एतेषां [illegible]

अयन्तु चादीनां प्रादीनाञ्चैकाक्षराणामनेकाक्षराणां वा पादान्ते यतावन्तादिवद्भाव इष्यते, न त्वनेकाक्षराणां पदमध्ये यतौ। तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात्।

तत्र चादीनामुदाहरणम्—

'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' इत्यादि ॥

प्रादीनामुदाहरणम्—

'दुरारूढप्रमोदं हसितमिव परि-स्पष्टमाशावधूभि'रित्यादि ॥

न पर्य्यन्तोऽस्ति वृत्तानां प्रस्तारगणनाविधौ।
पूर्वाचार्य्यकृतं चिह्नं वृत्तं किञ्चिदिहोच्यते ॥ *

तत्र गायत्रीच्छन्दसि वृत्तम्—

**तनुमध्या त्यौ ॥ ३ ॥†**

यस्य पादे तकारयकारौ, तत् 'तनुमध्या' नाम वृत्तम् ॥ यथा—

त य त य

ऽ ऽ । । ऽ ऽ ऽ ऽ । । ऽ ऽ

धन्या प्रियवाचा, कन्या तनुमध्या।
श्रोणीस्तनगुर्वी, भूयात् पतिभोग्या ॥

अत्र पादान्ते विशेषेण विरामः कर्त्तव्यः इत्याम्नायः।

उष्णिहि—

১। ছন্দোগ্রন্থে ছন্দোনিবদ্ধ শ্লোকসমূহের পাদাদিবিভাজকের (অর্থাৎ বিশ্রামস্থলজ্ঞাপকের) নাম যতি। ... দ্রষ্টব্য।

২। যে (গায়ত্রীছন্দের) প্রত্যেকপাদে তগণ ও যগণ থাকে, তাহাকে 'তনুমধ্যা' নামক ছন্দঃ বলে।

---

* प्रस्तारगणना तु अष्टमाध्यायान्ते प्रदर्शयिष्यते। शास्त्रता पिङ्गलाचार्य्येण गायत्र्याद्युत्कृतिपर्य्यन्तच्छन्दोऽनुसारीणि वृत्तानि दण्डकजातयश्च प्रदर्शिताः न तूक्थादिसुप्रतिष्ठापर्य्यन्तानि पञ्च छन्दांसि। तानि च छन्दांसि प्राकृतपिङ्गलच्छन्दः-कौस्तुभच्छन्दोमञ्जरीप्रभृतिषु द्रष्टव्यानि। ग्रन्थगौरवभयात् अविशिष्टप्रयोजनाभावाच्च विरता वयं तद्विवेचनात् ॥

† षडक्षरचतुष्पादात्मकगायत्रीच्छन्दसः प्रस्तारे क्रियमाणे चतुःषष्टिभेदा जायन्ते तत्र सप्तदशो भेदः तनुमध्येति नाम्ना प्रसिद्धः। एवमग्रेऽपि।

## कुमारललिता ज्सौ ग् ॥ ३ ॥

यस्य पादे जकारसकारौ गकारश्च, तद्वृत्तं 'कुमारललिता' नाम। त्रिभिश्चतुर्भिश्च यतुरपदेशं वर्णयन्ति। तत्रोदाहरणम्—

ज स ग ज स ग

| S | | | | S S | S | | | S S

यदीयरतिभूमौ विभाति निष्कलङ्कः।
कुमारललिताऽसौ कुलात् पतति नारी॥

अत्र केचिद् द्वाभ्यां पञ्चभिश्च यतिमिच्छन्ति। तत्रोदाहरणम्—

इदं वदनपद्मं प्रिये तव विभाति।
इह व्रजति मुग्धे मनो भ्रमरतां मे॥

अनुष्टुभि—

## माणवकाक्रीडितकं भ्तौ ल्गौ ॥ ४ ॥

यस्य पादे भकारतकारौ लकारगकारौ च, त-'माणवकाक्रीडितकं' नाम वृत्तम्। तत्रोदाहरणम्—

भ त लग भ त लग

S | | S S | | S S | | S S | | S

माणवकाक्रीडितकं, यः कुरुते वृद्ध—वयाः।
हास्यमसौ याति जने, भिक्षुरिव स्त्रीचपलः॥

अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः॥

৩। (২। উষ্ণিক্ ছন্দের) প্রত্যেক পাদে জগণ, সগণ ও গকার থাকে, তাহাকে 'কুমারললিতা' ছন্দঃ বলে।

৪। যে অনুষ্টুভ্ ছন্দের প্রত্যেক পাদে ভগণ, তগণ, লকার ও গকার থাকে, তাহাকে 'মাণবকাক্রীড়িতক' ছন্দঃ বলে।

## चित्रपदा भौ गौ ॥ ५ ॥

यस्य पादे भकारौ गकारौ च भवतस्त‘चित्रपदा’ नाम वृत्तम् । यथा—

भ भ गग भ भ गग

SII SII SS SII SII SS

यस्य मुखे प्रियवाणी, चेतसि सज्जनता च ।
चित्रपदापि च लक्ष्मी,—स्तं पुरुषं न जहाति ॥

अत्र पादान्ते यति: ॥

## विद्युन्माला मौ गौ ॥ ६ ॥

यस्य पादे मकारौ गकारौ च, त‘द्विद्युन्माला’ नाम वृत्तम् । यथा—

म म गग म म गग

SSS SSS SS SSS SSS SS

विद्युन्माला -लोलान् भोगान्, भुक्त्वा मुक्तौ यत्नं कुर्यात् ।
ध्यानोत्पन्नं नि:सामान्यं, सौख्यं भोक्तुं यद्याकाङ्क्षेत् ॥

अत्र चतुर्भिश्च चतुर्भिश्च यतिरित्याम्नाय: ॥

बृहत्याम् ।—

## हंसरुतं म्नौ गौ ॥ ७ ॥*

৫। যে অনুষ্টুভ্ ছন্দের প্রত্যেক পাদে দুইটী ভগণ ও দুইটী গকার থাকে, তাহাকে ‘চিত্রপদা’ নামক বৃত্ত বলে।

৬। যে অনুষ্টুভ্ ছন্দের প্রত্যেক পাদে দুইটী মগণ ও দুইটী গকার থাকে, তাহাকে ‘বিদ্যুন্মালা’ নামক বৃত্ত বলে।

* सूत्रमिदं पुस्तकान्तरे नास्ति ।

यस्य पादे मगणनगणौ गकारौ च भवतस्तद् वृत्तं 'हंसरुतं' नाम ॥

म　　न　ग　ग　　म　　न　ग　ग

S S S I I I S S　　S S S I I I S S

अभ्यागामिश्रमिलन्ती—मञ्जीरक्वणिततुल्यम् ।
तीरे राजति नदीनां, रम्यं हंसरुतमेतत् ॥

## भुजगशिशुभृ[सृ]ता नौ म् ॥ ८ ॥

यस्य पादे नकारौ मकारश्च भवति, तद्वृत्तं 'भुजगशिशुभृता' नाम । तत्रोदाहरणम्—

न　　न　　म　　न　　न　　म

I I I I I I S S S I I I I I I S S S

इयमधिकतरं रम्या, विकचकुवलय—श्यामा ।
रमयति हृदयं यूनां भुजगशिशुभृता नारी ॥

वक्रगतिरित्यर्थः, शिशुशब्दस्य सार्थकत्वात्, यथा रघुराजम्—
"मध्यस्थिता नु तरणीगतिवक्रभावा,—
नुन्नाङ्गिनाः फणिशिशोर्भवतापराधाः ॥" इति ।
अत्र सप्तभिर्द्वाभ्याञ्च यतिरित्याम्नायः ।

## हलमुखी रनौ स ॥ ९ ॥

यस्य पादे रेफनकारसकारा भवन्ति, तद्वृत्तं 'हलमुखी' नाम । तत्रोदाहरणम्—

৭। যে শ্লোকের প্রতিপাদে মগণ ও নগণ এবং দুইটি দীর্ঘ বর্ণ থাকে, তাহাকে 'হংসরুত' ছন্দ বলে।

৮। যে শ্লোকের প্রতিপাদে নগণদ্বয় ও মগণ থাকে, তাহাকে 'ভুজগশিশুভৃতা' ছন্দ বলে। এই ছন্দে সাত অক্ষর ও দুই অক্ষরে যতি থাকিবে।

र न स र न स

SIS III IIS SIS III IIS

गण्डयो,—रतिमय-क्षयं, यस्य खं ; प्रकट-दमनम् ।
आयतं कलहनिरतं मां प्रियं त्यज हंसमुखीम् ॥
अत्र त्रिभिः षड्भिश्च यतिरित्याम्नायः ॥

पङ्क्तौ—

## शुद्धविराड् मसौ जगौ ॥ १० ॥

यस्य पादे मकारसकारजकारगकारा भवन्ति, तद्वृत्तं 'शुद्धविराट्' नाम । तत्रोदाहरणम्—

म स ज ग म स ज ग

S S S I I S I S I S S S S I I S I S I S

विश्वं तिष्ठति कुक्षिकोटरे, वक्त्रे यस्य सरस्वती सदा ।
अस्मत्प्रपितामहो गुरु—र्ब्रह्मा शुद्धविराट् पुनातु नः ॥

अत्र पादान्ते यतिः ॥

## पणवो म्नौ यगौ ॥ ११ ॥

यस्य पादे मकारनकारयकारगकारा भवन्ति, तद्वृत्तं 'पणवो' नाम । तत्रोदाहरणम्—

৯। যে শ্লোকের প্রতিপাদে রগণ নগণ এবং সগণ থাকে, তাহাকে 'হংসমুখী' নামক ছন্দ বলে। এই ছন্দে তিন ও ছয় অক্ষরে যতি থাকিবে।

১০। যে শ্লোকের প্রতিপাদে মগণ, সগণ, জগণ ও একটি দীর্ঘবর্ণ থাকে, তাহাকে 'শুদ্ধবিরাট্' ছন্দ বলে। এই ছন্দে পাদান্তে যতি হইবে।

म म य गम म यग

S S S I I I I S S S S S S I I I I S S S

मीमांसारस—ममृतं पीत्वा शास्त्रोक्तिः पटु—रितरा भाति ।

एवं संमदि विदुषां मध्ये जल्पामो जय—पणबन्धत्वात् ।

अत्र पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ॥

## रुक्मवती भ्मौ स्गौ ॥ १२ ॥

यस्य पादे भकारमकारसकारगकारा भवन्ति, तद् वृत्तं 'रुक्मवती' नाम । तत्रोदाहरणम्—

भ म मग भ म सग

S I I S S S I I S S S I I S S S I I S S

पादतले पद्मोदरगौरे, राजति यस्या ऊर्ध्वगरेखा ।

सा भवति स्त्रीलक्षणयुक्ता, रुक्मवती सौभाग्यवती च ॥

अत्र पादान्ते यतिः ॥

## मयूरसारिणी र्जौ र्गौ ॥ १३ ॥

यस्य पादे रेफजकारौ रेफगकारौ च, तद् वृत्तं 'मयूरसारिणी' नाम । तत्रोदाहरणम्—

১১। যে শ্লোকের প্রতিপাদে মগণ, নগণ, যগণ ও একটী দীর্ঘবর্ণ থাকে, তাহাকে 'পণব' ছন্দ বলে। এই ছন্দে প্রতি পাঁচ অক্ষরে যতি হইবে।

১২। যে শ্লোকের প্রতিপাদে ভগণ, মগণ, সগণ ও একটি দীর্ঘবর্ণ থাকে, তাহাকে 'রুক্মবতী' নামক ছন্দ বলে। এই ছন্দে পাদান্তে যতি হইবে।

र ज र ग र ज र ग

S I S I S I S I S S S I S I S I S I S S

या वनान्तराण्युपैति रन्तुं, या भुजङ्गभोग मुक्तचित्ता ।
या द्रुतं प्रयाति सम्मतां सा, तां मयूरसारिणीं विजानात् ॥

अत्र पादान्ते यतिः ॥

## मत्ता म्भौ स्गौ ॥ १४ ॥

यस्य पादे मकारभकारसकारगकारास्तद् वृत्तं 'मत्ता' नाम । तत्रोदाहरणम्—

म भ स ग म भ स ग

S S S S I I I I S S S S S S I I I I S S

स्वैरोल्लापैः, श्रुति पुटपेयैः—गीतक्रीडा—सुरतविशेषैः ।
वामागारे कृतसुरतानां मत्ता नारी रमयति चेतः ॥

अत्र चतुर्भिः षड्भिश्च यतिरित्याम्नायः ॥

## उपस्थिता त्जौ ज्गौ ॥ १५ ॥

यस्य पादे तकारजकारौ जकारगकारौ च, तद् वृत्तं 'उपस्थिता' नाम । तत्रोदाहरणम्—

১৩। যে শ্লোকের প্রতিপাদে রগণ, জগণ, রগণ ও একটী দীর্ঘবর্ণ থাকে, তাহাকে 'ময়ূরসারিণী' ছন্দ বলে। এই ছন্দে পাদান্তে যতি হইবে।

১৪। যে শ্লোকের প্রতিপাদ মগণ, ভগণ, সগণ ও একটি দীর্ঘবর্ণ দ্বারা রচিত, তাহাকে 'মত্তা' নামক ছন্দ বলে। এই ছন্দে চারি অক্ষর ও ছয় অক্ষরে যতি হইবে।

त  ज  ज ग  त  ज  ज  ग

S S I I S I I S I S  S S  I I S I I S I S

एषा जगदेकमनोहरा, कन्या कनकोज्ज्वलदीधितिः ।
लक्ष्मी -रिव दानवसूदनं, पुरुषं—नरनाथमुपस्थिता ॥

अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ॥

त्रिष्टुभि—

## इन्द्रवज्रा तौ जगौ ग् ॥ १६ ॥

यस्य पादे तकारौ जकारगकारौ गकारश्च, तद् वृत्त'मिन्द्रवज्रा' नाम । तत्रोदाहरणम्—

त  त  ज  ग ग  त  त  ज  ग ग

S S I S S I I S I S S S S I S S I I S I S S

ये दुष्टदैत्या इह भूमिलोके इन्द्रं व्यधुर्गोद्वि—जदेव सङ्घं ।
तानिन्द्रवज्रादपि दारुणाङ्गान् व्याजीवयद् यः सततं नमस्ते ।

अपि च—

गोब्राह्मणस्त्रीव्रतिभिर्व्विरुद्धं, मोहात् करोत्यल्पमतिर्नृपो यः ।
तस्येन्द्रवज्राभिहतस्य पातः क्षोणीधरस्येव भवत्यवश्यम् ॥

अत्र पादान्ते यतिः ॥

## उपेन्द्रवज्रा ज्तौ जगौ ग् ॥ १७ ॥

यस्य पादे जकारतकारजकारा गकारौ च, तद् वृत्त'मुपेन्द्रवज्रा' नाम । तत्रोदाहरणम्—

১৫। যে শ্লোকের প্রতিপাদ তগণ, দুইটী জগণ ও একটী দীর্ঘবর্ণ দ্বারা রচিত, তাহাকে 'উপস্থিতা' ছন্দ বলে। এই ছন্দে দুই ও আট অক্ষরে যতি হইবে।

১৬। যে শ্লোকের প্রতিপাদ তগণদ্বয়, জগণ ও দুইটী দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'ইন্দ্রবজ্রা' বলে। এই ছন্দে পাদান্তে যতি-নিয়ম

ज त ज ग ग ज त ज ग ग

ISIS SIISI S SISI SSI I SI S S

भवन्नखाः कुन्ददलश्रियो ये, नमन्ति लक्ष्मीस्तनलेखनेऽपि ।
उपेन्द्रवज्राधिककर्कशत्वं, कथं गतास्ते रिपुदारणायाम् ॥

अत्र पादान्ते यतिः ॥

## आद्यन्तावुपजातयः ॥ १८ ॥

आद्यन्ताविति अनन्तरोक्तयोरिन्द्रवज्रोपेन्द्रवज्रयोः पादावाद्यन्तौ । तौ यदा विकल्पेन यथेष्टं भवतस्तदोपजातयः प्रस्तारवशाच्चतुर्दश प्रकारा जायन्ते ॥ (क)

১৭। যে শ্লোকের প্রতিপাদে জগণ, তগণ, জগণ ও দুইটী দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'উপেন্দ্রবজ্রা' বলে। এই ছন্দেও পাদান্তে যতি-নিয়ম।

(क) इतो प्रस्तारवशादित्यत्र प्रस्तारवशमादितिं पाठान्तरम् । अथ प्रस्तारनियमः कथ्यते । इकारेण इन्द्रवज्रापादः, उकारेण उपेन्द्रवज्रापादः । तथा च गकारस्थानीयेन इकारेण, तथा लकारस्थानीयेन उकारेण चतुरक्षरप्रस्तारवत् प्रस्तारे क्रियमाणे षोडश भेदा एव जायन्ते । तत्र चतुरिकारात्मकः प्रथमो भेदः शुद्धेन्द्रवज्राख्यः । षोडशश्चतुरुकारात्मको भेदः शुद्धोपेन्द्रवज्राख्यः । शेषाः मध्यस्थाः चतुर्दश भेदाः उपजातयो भवन्ति । हलायुधकृतटीकायामपि एतदेव विस्तरशमुपपादितम् । अथ बालानां सुखबोधार्थं गकारलकारस्थानीयाभ्याम् इकारोकाराभ्याम् उपजाति-प्रकारो लिख्यते, यथा—

(१) इइइइ (इन्द्रवज्रा)
(२) उइइइ (कीर्तिनाम्नी)
(३) इउइइ (वाणीनाम्नी)
(४) उउइइ (मालानाम्नी)
(५) इइउइ (शालानाम्नी)
(६) उइउइ (हंसीनाम्नी)
(७) इउउइ (मायानाम्नी)
(८) उउउइ (जायानाम्नी)
(९) इइइउ (बालानाम्नी)
(१०) उइइउ (आर्द्रानाम्नी)
(११) इउइउ (भद्रानाम्नी)
(१२) उउइउ (प्रेमानाम्नी)
(१३) इइउउ (रामानाम्नी)
(१४) उइउउ (ऋद्धिनाम्नी)
(१५) इउउउ (बुद्धिनाम्नी)
(१६) उउउउ (उपेन्द्रवज्रा)

तत्रोदाहरणम्—

त त ज ग ग त त ज ग ग

S S I S S I I S I S S S S I S S I I S I S S

तत्रोपजातिर्विविधा विदग्धैः संयोज्यते तु व्यवहारकाले। (इ०)

ज त ज ग ग ज त ज ग ग

I S I S S I I S I S S I S I S S I I S I S S

अतः प्रयत्नः प्रथमं विधेयो नृपेण पुंरत्नपरीक्षणया॥ (उ०)

एवमन्यान्युपजात्युदाहरणानि कुमारसम्भवादिकाव्येषु द्रष्टव्यानि। समवृत्तप्रस्तावे प्रसङ्गादुपजातीनामुपन्यासो लाघवार्थः। केचिदिदं सूत्रं व्याप्त्योपलक्षणपरं व्याचक्षते। तेन वंशस्थेन्द्रवंशापादयोरपि सङ्करादुपजातयो भवन्ति। तथा शालिनीवातोर्मीपादयोरन्येषामपि स्वल्पभेदानां प्रयोगानुसारेण उपजातयो द्रष्टव्याः॥

১৮। যে শ্লোকের কোন পাদ ইন্দ্রবজ্রা-লক্ষণ দ্বারা, কোন পাদ উপেন্দ্রবজ্রা-লক্ষণ দ্বারা লক্ষিত হয়, তাহাকে 'উপজাতি' বলে। এইরূপ বংশস্থবিলের সহিত ইন্দ্রবংশার এবং শালিনীর সহিত বাতোর্ম্মীর মিলনেও উপজাতি ছন্দ হইয়া থাকে। উপজাতি নানাবিধ; ইন্দ্রবজ্রার সহিত উপেন্দ্রবজ্রার মিলনে যে উপজাতি হয়, তাহার ভেদ প্রস্তারানুসারে চতুর্দ্দশ প্রকার।

प्रथमस्तावत् यत्रेन्द्रवज्राख्यः शेषास्तु यत्रोपेन्द्रवज्राख्याः। द्वितीयस्य चारभ्य पञ्चदशपर्यन्त-भेदानामेषां चतुर्दशानां यथाक्रमं नामानि कथ्यन्ते—"कीर्तिर्वाणी तथा माला शाला हंसी तथैव च। माया जाया तथा बाला चार्द्रा भद्रा ततः परम्॥ प्रेमा रामा तथा ऋद्धिः बुद्धिश्चैव विचक्षणैः। उपजातेस्तानि नामानि विज्ञेयानि यथाक्रमम्॥" एवं वंशस्थविलेन्द्रवंशापादाभ्यां तथा शालिनीवातोर्मीपादाभ्यामपि सर्वे च चतुर्दश प्रकारा उपजातयो भवन्ति। पूर्वोक्तानां तथा एतासामुदाहरणानि विस्तरता न दर्शितानि॥

## दोधकं भौ भगौ ग् ॥ १९ ॥

यस्य पादे भकारास्त्रयो गकारौ च भवतस्तद् वृत्तं 'दोधकं' नाम। तत्रोदाहरणम्—

भ भ भ ग ग भ भ भ ग ग

S I I S I I S I I S S S I I S I I S I I S S

दोधकमर्थविरोधकमुग्रं, लोचपलं युधि कातरचित्तम्।
स्वार्थपरं मतिहीनममात्यं, मुञ्चति यो नृपतिः स सुखी स्यात् ॥

अत्र पादान्ते यतिः। दोग्धीति दोधकः। केनाप्युपायेन राजानं दोग्धि ॥

## शालिनी म्तौ त्गौ ग् समुद्रऋषयः ॥ २० ॥

यस्य पादे मकारतकारौ तकारगकारौ गकारश्च भवति, तद् वृत्तं 'शालिनी' नाम। चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

म त त ग ग म त त ग ग

S S S S I S S I S S S S S S S I S S I S S

शुद्धश्यामा स्निग्धमुग्धायताक्षी, पीनश्रोणि,—र्दक्षिणावर्तनाभिः।
मध्ये क्षामा पीवरोरुस्तनी या श्लाघ्या भर्तुः शालिनी कामिनी सा ॥

## वातोर्मी म्भौ त्गौ ग् ॥ २१ ॥

यस्य पादे मकारभकारतकारा गकारौ च तद् वृत्तं 'वातोर्मी' नाम। चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

১৯। যে শ্লোকের প্রতিপাদ তিনটি ভগণ ও দুইটি দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'দোধক' বলে। এ ছন্দে পাদান্তে যতির নিয়ম।

২০। যে শ্লোকের প্রতিপাদ মগণ, তগণদ্বয় ও দুইটি দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'শালিনী' বলে। এই ছন্দে চারি ও সাত অক্ষরে যতি।

म भ त ग ग म भ त ग ग

S S S S I I S S I S S S S S S I I S S I S S

यात्यत्रैकं मर्पदं प्राप्य किञ्चित् स्याद्वा यस्या—श्चपला चित्तवृत्तिः ।
या दीर्घाङ्गी स्फुटमब्दाट्टहासा त्याज्या सा स्त्री द्रुतवातोर्म्मिमाला ॥

वातोर्म्मीति "स्त्रियां कृदिकारादक्तिनः" इति ङीप् ॥

## भ्रमरविलसिता म्भौ न्लौ ग् ॥ २२ ॥

यस्य पादे मकारभकारनकारलकारगकाराःस्तद् वृत्तं 'भ्रमरविलसिता' नाम । चतुर्भिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

म भ न ल ग म भ न ल ग

S S S S I I I I I I S S S S S I I I I I I S

किं ते वक्त्रं चलदलकचितं, किं वा पद्मं, भ्रमरविलसितम् ।
इत्येवं मे जनयति मनसि भ्रान्तिं कान्ते परिसरभरसि ॥

## रथोद्धता र्नौ र्लौ ग् ॥ २३ ॥

यस्य पादे रेफनकारौ रेफलकारौ गकारश्च, तद्वृत्तं 'रथोद्धता' नाम । तत्रोदाहरणम्—

२१। যে শ্লোকের প্রতিপাদ মগণ, ভগণ, তগণ ও দুইটি দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'বাতোর্ম্মী' বলে। এই ছন্দে চারি ও সাত অক্ষরে যতি।

২২। যে শ্লোকের প্রতিপাদ মগণ, ভগণ, নগণ, একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা গ্রথিত, তাহাকে 'ভ্রমরবিলসিতা' বলে। এই ছন্দে চারি ও সাত অক্ষরে যতি।

र न र ल ग र न र ल ग

S I S I I I S I S I S   S I S I I S I S I S

या करोति विविधैर्विटैः समं सङ्गतिं परगृहे रता च या।
आनयत्युभयतोऽपि बान्धवान् मार्गधूलिरिव सा रथोद्धता॥

अत्र पादान्ते यतिः॥

## स्वागता र्नौ भ्गौ ग्॥ २४॥

यस्य पादे रेफनकारभकारा गकारौ च, तद् वृत्तं 'स्वागता' नाम। तत्रोदाहरणम्—

र न भ ग ग र न भ ग ग

S I S I I I S I I S S   S I S I I I S I I S S

आहवं प्रविशतो यदि राहुः पृष्ठतश्चरति वायुसमेतः।
प्राणवृत्तिरपि यस्य शरीरे स्वागता भवति तस्य जयश्रीः॥

अत्र पादान्ते यतिः॥

## वृन्ता नौ स् गौ ग्॥ २५॥

यस्य पादे नकारौ सकारगकारौ, गकारश्च, तद् वृत्तं 'वृन्ता' नाम। अत्र मण्डूकप्लुतिन्यायेन समुद्रऋतव इत्यनुवर्त्तते। तेन चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

२३। যে শ্লোকের প্রতিপাদ রগণ, নগণ, রগণ, একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা গ্রথিত, তাহাকে 'রথোদ্ধতা' বলে। এই ছন্দে পাদান্তে যতি।

২৪। যে শ্লোকের প্রতিপাদ রগণ, নগণ, ভগণ ও দুইটি দীর্ঘবর্ণ দ্বারা গ্রথিত, তাহাকে 'স্বাগতা' বলে। এই ছন্দে পাদান্তে যতিনিয়ম।

न न स गग न न स गग

। । । । । । । । । ऽ ऽ ऽ । । । । । । । । । ऽ ऽ ऽ

द्विजगुरु-परिभवकारी यो नरपति-रतिधनलुब्धात्मा ।
ध्रुवमिह निपतति पापोऽसौ फलमिव पवनहतं वृन्तात् ॥

## श्येनी र्जौ र्लौग् ॥ २६ ॥

यस्य पादे रेफजकारौ रेफलकारौ गकारश्च, तद् वृत्तं 'श्येनी' नाम। तत्रोदाहरणम्—

र ज र लग र ज र लग

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ऽ । ऽ । ऽ

क्रूरदृष्टिरायतास्यनासिका चञ्चला कठोरतीक्ष्णनादिनी ।
युद्धकाङ्क्षिणी सदामिषप्रिया, श्येनिकेव सा विगर्हिताङ्गना ॥

अत्र पादान्ते यतिः ॥

## विलासिनी ज् रौ ज् गौ ग् ॥ २७ ॥

यस्य पादे जकाररेफौ जकारगकारौ गकारश्च भवति, तद् वृत्तं 'विलासिनी' नाम। तत्रोदाहरणम्—

ज र ज गग ज र ज गग

। ऽ । ऽ । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ऽ

विलासिनी विलोकितः स कामो, दधाति कामसत्त्वचेष्टितं या ।

২৫। যে শ্লোকের প্রতিপাদ নগণদ্বয়, সগণ ও দুইটি গুরুবর্ণ দ্বারা গ্রথিত, তাহাকে 'বৃত্তা' ছন্দ বলে। এই ছন্দে মতভেদানুসারে চারি ও সাত অক্ষরে যতি।

২৬। যে শ্লোকের প্রতিপাদ রগণ, জগণ, রগণ; একটি লঘুবর্ণ ও একটি গুরুবর্ণ দ্বারা গ্রথিত, তাহাকে 'শ্যেনী' ছন্দ বলে। এই ছন্দে পাদান্তে যতিনিয়ম।

करोति चञ्चलाक्षिदृष्टिपातैः, यतात्मनश्च योगिनोऽपि मत्तान् ॥

जगती ॥ २८ ॥

अधिकारोऽयमध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामस्तज्जगतीत्येवं वेदितव्यम्। वक्ष्यति च, 'तोटकं सः' (६।३२) इति, तज्जगतीपादस्य लक्षणं भवति ॥

वंशस्था जतौ जरौ ॥ २९ ॥

यस्य पादे जकारतकारौ जकाररेफौ च भवतस्तद् वृत्तं 'वंशस्था' नाम। तत्रोदाहरणम्—

ज त ज र ज त ज र

I S I S S I I S I S I S I S I S S I I S I S I S

विशुद्धवंशस्थमुदारचेष्टितं गुणप्रियं मित्रमुपास्व सज्जनम्।
विपत्तिमग्नस्य करावलम्बनं करोति यः प्राणपरिक्रयेण सः ॥

अत्र पादान्ते यतिः ॥

इन्द्रवंशा तौ जरौ ॥ ३० ॥

২৭। যে শ্লোকের প্রতিপাদে জগণ, রগণ, জগণ ও দুইটি গুরুবর্ণ দ্বারা গ্রথিত, তাহাকে 'বিলাসিনী' ছন্দ বলে। এই ছন্দে যতিনিয়ম নাই।

২৮। ষষ্ঠাধ্যায়ের সমাপ্তিপর্য্যন্ত জগতী-সংজ্ঞার অধিকার থাকিবে। এই জগতীসংজ্ঞা হইতে অধ্যায়সমাপ্তিপর্য্যন্ত সমস্ত ছন্দের লক্ষণই জগতীসংজ্ঞার অন্তর্গত। সুতরাং ভবিষ্যতে যে "তোটকং সঃ" এইরূপ তোটক লক্ষণ বলিব, তাহাও জগতীপাদের অক্ষরসংখ্যাবোধক হইবে। তোটক লক্ষণের তাৎপর্য্য তোটক লক্ষণের অনুবাদে প্রদর্শিত হইবে।

২৯। যে ছন্দে জগণ, তগণ, জগণ ও রগণ থাকে, তাহাকে 'বংশস্থা' নামক বৃত্ত বলে।

यस्य पादे तकारौ जकाररेफौ च, तद् वृत्तं 'मिन्द्रवंशा' नाम। तत्रोदाहरणम्—

त त ज र त त ज र

SSI SSI ISI SIS SSIS SIISISIS

कुर्वीत यो देवगुरुद्विजन्मना—मुर्वीपतिः पालनमर्थलिप्सया।
तस्येन्द्रवंशेऽपि गृहीतजन्मनः संजायते श्रीः प्रतिकूलवर्त्तिनी॥
अत्र पादान्ते यतिः॥

## द्रुतविलम्बितं नभौ भरौ॥ ३१॥

यस्य पादे नकारभकारौ भकाररेफौ च भवतस्तद् वृत्तं द्रुतविलम्बितं' नाम। तत्रोदाहरणम्—

न भ भ र न भ भ र

III SII SII SIS III SIISIISIS

द्रुतगतिः पुरुषो धनभाजनं भवति मन्दगतिश्च सुखोचितः।
द्रुतविलम्बितखेलगतिर्नृपः सकलराज्यसुखं प्रियमश्नुते॥
अत्र पादान्ते यतिः॥

## तोटकं स॥ ३२॥

जगत्यधिकारे यावद्भिः सकारैर्जगतीपादः पूर्य्यते, तावन्त एव पादे यत्र सकारा भवन्ति, तद्वृत्तं 'तोटकं नाम। तत्रोदाहरणम्—

৩০। যাহার প্রতিচরণে দুইটি তগণ, জগণ ও রগণ থাকে, তাহাকে "ইন্দ্রবংশা" নামক বৃত্ত বলে। এই ছন্দেও পাদান্তে যতি হইবে।

৩১। যাহার প্রতিচরণে নগণ, ভগণদ্বয় ও রগণ থাকে, তাহাকে "দ্রুতবিলম্বিত" নামক বৃত্ত বলে। এই ছন্দেও পাদান্তে যতি নিয়ম।

स स स स स स स स

I I S I I S I I S I I S I I S I I S I I S I I S

अमुना यमुनाजलकेलिकृता सहसा सरसा परिरभ्य धृता ।
हरिणा हरिणाकुलनेत्रवती न ययौ नवयौवनभारवती ॥

अन्यच्च—

त्यज तोटकमर्थनियोगकरं प्रमदाधिकृतं व्यसनोपहतम् ।
उपधाभिरशुद्धमतिं सचिवं नरनायक भीरुकमायुधिकम् ॥

अत्र पादान्ते यतिः ॥

## पुटो नौ म्यौ वसुसमुद्राः ॥ ३३ ॥

यस्य पादे नकारौ मकारयकारौ च भवतस्तद् वृत्तं 'पुटो' नाम । अष्टभिश्चतुर्भिश्च यतिः । तत्रोदाहरणम्—

न न म य न न म य

I I I I I I S S S I S S I I I I I I S S S I S S

न विचलति कथञ्चिन्न्यायमार्गाद् वसुनि शिथिलमुष्टिः पार्थिवो यः ।
अमृतपुट इवासौ पुण्यकर्म्मा भवति जगति सेव्यः सर्व्वलोकैः ।

## जलोद्धतगतिर्ज्सौ जसौ रसस्वरः ॥ ३४ ॥

यस्य पादे जकारसकारौ पुनस्तावेव भवतस्तद् वृत्तं 'जलोद्धतगति'र्नाम । षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम्—

৩২। জগতী-অধিকার অনুসারে যতক্ষণ পর্য্যন্ত দ্বাদশাক্ষর পূর্ণ না হয়, ততক্ষণ সগণ ব্যবহার করিবে—অর্থাৎ যাহার প্রতিপাদে চারিটি সগণ হয়, তাহাকে "তোটক" বলে। ইহারও পাদান্তে যতিনিয়ম।

৩৩। যাহার প্রতিপাদে নগণদ্বয়, মগণ ও যগণ থাকে, তাহাকে 'পুট' নামক বৃত্ত বলে। এই ছন্দে আট ও চার অক্ষরে যতি হইবে।

ज स ज स ज स ज स

I S I I I S I S I I I S I S I I I S I S I I I S

भनक्ति समरे बहूनपि रिपून् हरिः प्रभुरसौ भुजोर्जितबलः।
जलोद्धतगति—र्यथैव मकर—स्तरङ्गनिकरं करेण परितः॥

## कुसुमविचित्रा न्यौ न्यौ ॥ ३५ ॥

यस्य पादे नकारयकारौ पुनरपि तावेव भवतस्तद् वृत्तं 'कुसुमविचित्रा' नाम। षड्भिः षड्भिश्च यतिः। तत्रोदाहरणम्—

न य न य न य न य

I I I I S S I I I I S S I I I I S S I I I I S S

विगलितहारा सकुसुममाला सचरणलाक्षा वलयसुलक्षा।
विरचितवेशं सुरतविशेषं कथयति शय्या कुसुमविचित्रा॥

## ततं नौ म्रौ ॥ ३६ ॥

यस्य पादे नकारौ मकाररेफौ च, तद् वृत्तं 'ततं' नाम।
तत्रोदाहरणम्—

न न म र न न म र

I I I I I I S S S S I S I I I I I I S S S S I S

कुरु करुणमियं गाढ़ोत्कण्ठिका यदुतनयचकोरीकामाधिका।
विरहदहनसन्तापदग्धैः क्षया पिबतु तव मुखेन्दोर्बिम्बं द्रुमा॥

৩৪। যাহার প্রতিপাদে জগণ, সগণ, পুনর্ব্বার জগণ ও সগণ থাকে, তাহাকে "জলোদ্ধতগতি" নামক বৃত্ত বলে। এই ছন্দে প্রতি ছয় অক্ষরে যতি হইবে।

৩৫। যাহার প্রতিপাদে নগণ, যগণ, নগণ ও যগণ থাকে, তাহাকে "কুসুমবিচিত্রা" নামক ছন্দ বলে। এই ছন্দে প্রতি ছয় অক্ষরে যতি হইবে।

## चञ्चलाक्षिका नौ रौ ॥ ३७ ॥

यस्य पादे नकारौ रेफौ च, तद् वृत्तं 'चञ्चलाक्षिका' नाम। तत्रोदाहरणम् –

न न र र न न र र

I I I I I I S I S S I S I I I I I I S I S S I S

अतिसुरभिरभाजि पुष्पश्रिया—मतनुतरतयेव सन्तानकः।
तरुणपरभृतः स्वनं रागिणा-मतनुत रतये वसन्तानकः॥

## भुजङ्गप्रयातं याः ॥ ३८ ॥

यस्य पादे चत्वारो यकारास्तद् वृत्तं 'भुजङ्गप्रयातं' नाम। तत्रोदाहरणम्।

य य य य य य य य

I S S I S S I S S I S S I S S I S S I S S I S S

पुरः साधुवद्वाति मिथ्या विनीतः परोक्षे करोत्यर्थनाशं हताशः।
भुजङ्गप्रयातोपमं यस्य चित्तं त्यजेत्तादृशं दुर्जनं क्षुद्रमित्रम्॥

अत्र पादान्ते यतिः॥

## स्रग्विणी राः ॥ ३९ ॥

यस्य पादे चत्वारो रेफास्तद् वृत्तं 'स्रग्विणी' नाम। तत्रोदाहरणम्—

৩৬। যাহার প্রতিপাদে নগণদ্বয়, মগণ ও যগণ থাকে, তাহাকে "তন্ত" নামক বৃত্ত বলে। এই ছন্দে যতি নিয়ম নাই।

৩৭। যাহার প্রতিপাদে দুইটি নগণ ও দুইটি রগণ থাকে, তাহাকে "চঞ্চলাক্ষিকা" নামক বৃত্ত বলে। এই ছন্দেও যতিনিয়ম নাই।

৩৮। যাহার প্রতিপাদে চারিটি যগণ থাকে, তাহাকে "ভুজঙ্গপ্রয়াত" নামক বৃত্ত বলে। এই ছন্দে পাদান্তে যতিনিয়ম।

र र र र र र र र

S I S S I S S I S S I S S I S S I S S I S S I S S I S

यो रणे युध्यते निर्भरं निर्भय —स्त्यागिता यस्य सर्व्वस्वदानावधिः ।
तं नरं वीर्य्यलक्ष्मीयशःस्रग्विणी नूनमभ्येति सत्कीर्त्ति युक्तांशुका ॥

अत्र पादान्ते यतिः ॥

## प्रमिताक्षरा स्जौ सौ ॥ ४० ॥

यस्य पादे सकारजकारौ सकारौ च भवतस्तद् वृत्तं 'प्रमिताक्षरा' नाम । तत्रोदाहरणम्—

स ज स स स ज स स

I I S I S I I I S I I S I I S I S I I I S I I S

परिशुद्धवाक्यरचनातिशयं परिषिञ्चती श्रवणयोरमृतम् ।
प्रमिताक्षरापि विपुलार्थवती, भारती हरति मे हृदयम् ॥

अत्र पादान्ते यतिः ॥

## कान्तोत्पीडा भ्मौ स्मौ ॥ ४१ ॥

यस्य पादे भकारमकारौ सकारमकारौ च भवतस्तद् वृत्तं 'कान्तोत्पीडा' नाम । तत्रोदाहरणम्—

भ म स म भ म स म

S I I S S S I I S S S S I I S S S I I S S S S

कामशरैर्व्याप्ता खलु कान्तोत्पीडा—मामवती दुःखैः परिमुक्ता या ।
सा लभते चेत् कामुकयोगं गाढं दुःखविमुक्ता स्यात् परमानन्दाप्ता ॥

अत्र पादान्ते यतिः ॥

৩৯। যাহার প্রতিপাদে চারিটি রগণ থাকে তাহার নাম "স্রগ্বিণী" বৃত্ত।
৪০। যাহার প্রতিপাদে সগণ, জগণ ও পুনর্ব্বার দুইটি সগণ হয়, তাহাকে "প্রমিতাক্ষরা" নামক বৃত্ত বলে। ইহার পাদান্তে যতিনিয়ম।

## वैश्वदेवी मौ याविन्द्रियऋषयः ॥ ४२ ॥

यस्य पादे मकारौ यकारौ च भवतस्तद् वृत्तं 'वैश्वदेवी' नाम। पञ्चसु सप्तसु च यतिः। तत्रोदाहरणम्—

म म य य

S S S S S S I S S S I S S

धन्यः पुण्यात्मा जायते कोऽपि वंशे

म म य य

S S S S S S I S S I S S

तादृक् पुत्रोऽसौ येन गोत्रं पवित्रम्।
गोविप्रज्ञाति—स्वामिकार्य्ये प्रवृत्तः
शुद्धः स्वाचारो वैश्वदेवो भवेद् यः ॥

## वाहिनी त्मौ म्याहृषिकामशराः ॥ ४३ ॥

यस्य पादे तकारमकारौ मकारयकारौ च भवतस्तद् वृत्तं 'वाहिनी' नाम। सप्तभिः पञ्चभिश्च यतिः। तत्रोदाहरणम्—

त म म य

S S I S S S S S S I S S

यो वाहिनीं क्रव्यादां वृत्यर्धमानान्

৪১। যে ছন্দের প্রতিপাদে ভগণ, মগণ, সগণ ও মগণ থাকে, তাহাকে "কান্তোৎপীড়া" নামক বৃত্ত বলে। ইহার পাদান্তে যতিনিয়ম।

৪২। যাহার প্রতিপাদে দুইটি মগণ ও দুইটি যগণ থাকে, তাহাকে "বৈশ্বদেবী" নামক বৃত্ত বলে। এই ছন্দে পাঁচ ও সাত অক্ষরে যতি হইবে।

त म म य

ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ

छन्नं हि यत्नोऽनन्तः सोऽप्ययं मूर्च्छाम् ।
प्रायः किमेतच्चित्रं पौलस्त्ययत्नया
यातं न यच्चान्तस्त्रैवारित्रामेयाम् ॥*

## नवमालिनी नजौ भ्याविति ॥ ४४ ॥

यस्य पादे नकारजकारभकारयकारा भवन्ति, तद्वृत्तं 'नवमालिनी' नाम । तत्रोदाहरणम्—

न ज भ य न ज भ य

। । । । ऽ । ऽ । । । ऽ ऽ । । । । ऽ । ऽ । । । ऽ ऽ

धवलयशोऽंशुकेन परिवीता सकलजनानुराग—सुरभ्यात्मा ।
दृढगुणबद्धकीर्त्ति—कुसुमौघे,—स्तव नवमालिनीव नृपलक्ष्मीः ॥
अत्र वसुसमुद्रैर्यतिरित्याम्नायः ॥
इति भट्टहलायुधकृतायां छन्दोवृत्तौ षष्ठोऽध्यायः ॥६

৪৩। যাহার প্রতিপাদে তগণ, মগণ, মগণ ও যগণ থাকে, তাহাকে "বাহিনী" নামক বৃত্ত বলে।

৪৪। যাহার প্রতিপাদে নগণ, জগণ, ভগণ ও যগণ থাকে, তাহাকে "নবমালিনী" নামক বৃত্ত বলে।

হলায়ুধকৃত ছন্দোবৃত্তির ষষ্ঠাধ্যায় সমাপ্ত। ৬

---

* नेदमुदाहरणं कुत्रापि प्राचीनपुस्तकेषु दृश्यते, अस्माभिस्तु अन्यतः संगृह्यात्र सन्निवेशितमिति ।

# সপ্তমোঽধ্যায়ঃ ।



* ইদানীমতিজগতীশক্বর্য্যতিশক্বর্য্যষ্টিরত্যষ্টির্ধৃতিরতিধৃতিশ্চেতি সপ্ত-চ্ছন্দাংসি একৈকপাদাক্ষরবৃদ্ধ্যা ক্রমেণোদাহ্রিয়ন্তে ।

তত্রাতিজগত্যাম্—

## প্রহর্ষিণী ম্নৌ জ্রৌ গ্ ত্রিকদশকৌ ॥ ১ ॥

যস্য পাদে মকারনকারজকাররেফগকারা ভবন্তি, তদ্ বৃত্তং 'প্রহর্ষিণী' নাম । ত্রিভির্দশভিশ্চ যতিঃ । তত্রোদাহরণম্—

ম ন জ র গ ম ন জ র গ



S S S I I I I S I S I S   S S S S I I I I S I S I S S

উত্তুঙ্গ-স্তনকলসদ্বয়োন্নতাঙ্গী লোলাক্ষী বিপুলনিতম্বশালিনী চ ।
বিম্বোষ্ঠী নরবরমুষ্টিমেয়মধ্যা সা নারী ভবতি মনঃপ্রহর্ষিণীতি ॥

## রুচিরা জভৌ সজৌ গ্ চতুর্ণবকৌ ॥ ২ ॥

যস্য পাদে জকারভকারৌ সকারজকারৌ গকারশ্চ, তদ্ বৃত্তং 'রুচিরা' নাম । চতুর্ভির্নবভিশ্চ যতিঃ । তত্রোদাহরণম্—

* এখন এক এক অক্ষর বৃদ্ধি দ্বারা অতিজগতী, শক্বরী, অতিশক্বরী, অষ্টি, অত্যষ্টি, ধৃতি ও অতিধৃতি এই সাতটি ছন্দঃ ক্রমে উদাহৃত হইতেছে ।

১ । যে ছন্দের প্রতিপাদে মগণ, নগণ, জগণ, রগণ ও একটি গুরু থাকে, তাহাকে 'প্রহর্ষিণী' বলে । এই ছন্দে তিন ও দশ অক্ষরে যতি হইবে ।

২ । যাহার প্রতিপাদে জগণ, ভগণ, সগণ ও একটি গুরু থাকে, তাহাকে 'রুচিরা' বলে । এই ছন্দে চারি ও নয় অক্ষরে যতি হইবে ।

ज भ स ज ग ज भ स ज ग

I S I S I I I I S I S I S I S I S I I I I S I S I S

मृगत्वचा रुचिरतराम्बरक्रियः, कपालभृत् कपिलजटाग्रपल्लवः ।
ललाटदृग्-दहनहुतोज्झितस्मरः पुनातु वः शिशुशशिशेखरः शिवः ॥

## मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ॥ ३ ॥

यस्य पादे मकारतकारौ यकारसकारौ गकारश्च, तद् वृत्तं 'मत्तमयूरं' नाम ; पूर्व्ववत् यतिः । तत्रोदाहरणम्—

म त य स ग म त य स ग

S S S S S I I S S I I S S S S S S S I I S S I I S S

व्यूढोरस्कः सिंहसमानाननमध्यः पीनस्कन्धो मांसलहस्तायतबाहुः ।
कम्बुग्रीवः स्निग्धशरीरस्तनुलोमा भुङ्क्ते राज्यं मत्तमयूराकृतिनेत्रः ॥

## गौरी नौ न्सौ ग ॥ ४ ॥

यस्य पादे नकारत्रयं सकारो गकारश्च, तद् वृत्तं 'गौरी' नाम ।
तत्रोदाहरणम्—

न न न स ग न न न स ग

I I I I I I I I I I I S S I I I I I I I I I I I S S

सकलभुवनजनप्रणतपादा निजपदभजनशमितविषादा ।
विजितसरसिजनयनपद्मा भवतु सकलमिह जगति गौरी ॥

मत्कृतम्—

৩। যাহার প্রতিপাদে মগণ, তগণ, যগণ, সগণ ও একটি গুরু থাকে, তাহাকে 'মত্তময়ূর' নামক বৃত্ত বলে। এই ছন্দে চারি ও নয় অক্ষরে যতি হইবে।

৪। যাহার প্রতিপাদে তিনটি নগণ, সগণ ও একটি গুরু থাকে, তাহাকে 'গৌরী' নামক বৃত্ত বলে।

## असम्बाधा म्तौ न्सौ गाविन्द्रियनवकौ ॥ ५ ॥

यस्य पादे मकारतकारौ नकारसकारौ गकारौ च भवतस्तद् वृत्त-'असम्बाधा' नाम। पञ्चभिर्नवभिश्च यतिः। तत्रोदाहरणम्—

म त न स ग ग

ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ

भङ्क्त्वा दुर्गाणि द्रुमवनमखिलं छित्त्वा
हत्वा तत्सैन्यं करितुरगबलं हृत्वा।
येनासम्बाधा क्षितिरजनि विपक्षाणां
सर्व्वोर्वीनाथः स जयति नृपतिर्भञ्जः॥

## अपराजिता नौ रसौ लगौ स्वरर्षयः ॥ ६ ॥

यस्य पादे नकारौ रेफसकारलकारगकाराश्च, तद् वृत्त'मपराजिता' नाम। सप्तभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

न न र स ल ग न न र स ल ग

। । । । । । ऽ । ऽ । । ऽ । ऽ । । । । । । ऽ । ऽ । । ऽ । ऽ

फणिपतिवलयं जटामुकुटोज्ज्वलं मनसिजमथनं त्रिशूलविभूषितम्।
स्मरसि यदि सखे शिवं शशिशेखरं भवति तव तनुः परैरपराजिता॥

## प्रहरणकलिता नौ भनौ लगौ च ॥ ७ ॥

यस्य पादे नकारौ भकारनकारलकारगकाराश्च, तद् वृत्तं 'प्रहरण-कलिता' नाम। चकारात् पूर्व्वोक्तैव यतिः। तत्रोदाहरणम्—

৫। যাহার প্রতিপাদে মগণ, তগণ, নগণ সগণ ও দুইটি গুরু থাকে, তাহাকে "অসম্বাধা" নামক বৃত্ত বলে।

৬। যাহার প্রতিপাদে নগণদ্বয় রগণ, সগণ, একটী লঘু ও একটি গুরু থাকে তাহাকে "অপরাজিতা" নামক ছন্দ বলে। এই ছন্দে সাত সাত অক্ষরে যতি।

न न भ न लग

। । । । । । । ऽ । । । । । । ऽ

सुरमुनिमनुजैरुपचितचरणां
रिपुभयचकित—त्रिभुवनशरणाम् ।
प्रणमत महिषासुरवधकुपितां,
प्रहरणकलितां पशुपतिदयिताम् ॥

## वसन्ततिलका त्भौ जौ गौ ॥ ८ ॥

यस्य पादे तकारभकारौ जकारौ गकारौ च, तद् वृत्तं 'वसन्ततिलकं' नाम। तत्रोदाहरणम्—

त भ ज ज ग ग

ऽ ऽ । ऽ । । । ऽ । । ऽ । ऽ ऽ

उद्धर्षिणी जनदृशां स्तनभारगुर्वी
नीलोत्पलद्युतिमलिम्लुचलोचना च ।
सिंहोन्नतत्रिकतटी कुटिलालकान्ता
कान्ता वसन्ततिलका नृपवल्लभाऽसौ ॥

अत्र पादान्ते यतिः ॥

## सिंहोन्नता काश्यपस्य ॥ ९ ॥

इयमेव वसन्ततिलका काश्यपस्य आचार्यस्य मतेन 'सिंहोन्नता' नाम भवति। पूर्वमेवोदाहरणम्—

৭। যাহার প্রতিপাদে ছইটি নগণ, ভগণ, একটি লঘু ও একটি গুরু থাকে, তাহাকে "প্রহরণকলিতা" নামক বৃত্ত বলে। এই ছন্দেও সাত সাত অক্ষরে যতি।

৮। যাহার প্রতিপাদে তগণ, ভগণ জগণদ্বয় ও ছইটি গুরু থাকে, তাহাকে "বসন্ততিলক" নামক বৃত্ত বলে।

## उद्धर्षिणी सैतवस्य ॥ १० ॥

इयमेव वसन्ततिलका सैतवस्य आचार्य्यस्य मते 'उद्धर्षिणी' नाम ॥ पूर्व्वमेवोदाहरणम् —

अतिशक्कर्य्याम् —

## चन्द्रावर्त्ता नौ नौ स ॥ ११ ॥

यस्य पादे नकाराश्चत्वारः सकारश्च, तद् वृत्तं 'चन्द्रावर्त्ता' नाम ॥ तत्रोदाहरणम् —

न न न न स

। । । । । । । । । । । । । । ऽ

पटुजवपवन—चलितजललहरी-
तरलितविहग—निचयरवमुखरम् ।
विकसितकमल—सुरभिशुचिसलिल
विचरति पथिक—मनसि शरदि सरः ॥

अत्र स्वरैश्चतुर्भिश्च यतिविन्यासाभावः ॥

## मालर्त्तुनवकौ चेत् ॥ १२ ॥

सैव चन्द्रावर्त्ता 'माला' नाम भवति, यदा षष्ठे नवमे च वर्णे यतिः ॥ तत्रोदाहरणम्—

नवविकसित—कुवलयदलनयने
निशमय नव—जलधरमिह गगने ।

৯। এই "বসন্ততিলক" ছন্দঃ কাশ্যপ আচার্য্যের মতে "সিংহোন্নতা" নামে কথিত হয়।

১০। সৈতবাচার্য্য এই বসন্ততিলকাকে "উদ্ধর্ষিণী" বলিয়া থাকেন।

১১। যাহার প্রতিপাদে চারিটি নগণ ও একটি সগণ আছে, তাহাকে "চন্দ্রাবর্ত্তা" বলে।

अपनय रुष—मुपसर मम सविधं
यदि रतिसुख—मभिलषसि बहुविधम् ॥

मणिगुणनिकरो वस्वृषयः ॥ १३ ॥

सैव चन्द्रावर्त्ता 'मणिगुणनिकरो' नाम भवति, यदा अष्टभिः सप्तभिश्च यतिः ॥ तत्रोदाहरणम्—

कथमपि निपतित—मतिमहति पटे
नरमनुसरति न फलमनुपचितम् ।
अपि वरयुवतिषु कुचतटनिहितः
स्फुरति न वपुरिह मणिगुणनिकरः ॥

मालिनी नौ म्यौ य ॥ १४ ॥

यस्य पादे नकारौ मकारयकारौ यकारश्च, तद् वृत्तं 'मालिनी' नाम । पूर्व्ववद् यतिः ॥ तत्रोदाहरणम्—

न न म य य

। । । । । । ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ

अतिविपुलललाटं पीवरोरःकपाटं
सुघटितदशनोष्ठं व्याघ्रतुल्यप्रकोष्ठम् ।
पुरुषमशनिलेखा—लक्षणं वीरलक्ष्मी—
रतिसुरभियशोभि-र्मालिनी-वाभ्युपैति ॥

अष्टी—

১২। এই "চন্দ্রাবর্ত্তা" ছন্দের ষষ্ঠ ও নবম অক্ষরে যতি হইলে, ইহাকেই "মালা" বলে।

১৩। যখন এই "চন্দ্রাবর্ত্তার" আট ও সাত অক্ষরে যতি হয়, তখন ইহার নাম "মণিগুণনিকর" হইবে।

১৪। যাহার প্রতিপাদে দুইটি নগণ, একটি মগণ ও যগণদ্বয় হইবে, তাহাকে "মালিনী" বলে

**ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥ १५ ॥**

यस्य पादे भकाररेफौ नकारास्त्रयो गकारश्च, तद् वृत्तं 'ऋषभगजविलसितं' नाम। सप्तभिर्नवभिश्च यतिः ॥ तत्रोदाहरणम्—

भ र न न न ग

S I I S I S I I I I I I I S

आयतबाहुदण्ड—मुपचितपृथुहृदयं
पीनकटिप्रदेश—मृषभगजविलसितम्।
वीरमुदारसत्त्व—मतिशयगुणरसिकं
श्रीरतिचञ्चलापि न परिहरति पुरुषम् ॥

अत्यष्टौ—

**हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः ॥ १६ ॥**

यस्य पादे नकारसकारमकाररेफाः सकारलकारगकाराश्च, तद् वृत्तं 'हरिणी' नाम। षड्भिश्चतुर्भिः सप्तभिश्च यतिः ॥ तत्रोदाहरणम्—

न स म र स ल ग

I I I I I S S S S S I S I I S I S

कुवलयदल—श्यामा पीना—यतस्तनशालिनी
चकितहरिणी—नेत्रच्छाया मलिम्लुचलोचना।
मनसिजधनु—र्ज्यानिर्घोषै—रिव श्रुतिपेशलै—
र्मनसि ललना लीलालापः करोति ममोत्सवम् ॥

एतदृषभविलसितमित्यपरं।

১৫। যাহার প্রতিপাদে ভগণ, রগণ, তিনটি নগণ ও গকার হইবে, তাহাকে "ঋষভগজবিলসিত" নামক ছন্দ বলে। এই ছন্দে সাত ও নয় অক্ষরে যতি হইবে।

## पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ ॥ १७ ॥

यस्य पादे जकारसकारौ पुनस्तौ यकारलकारगकाराश्च, तद् वृत्तं 'पृथ्वी' नाम। अष्टभिर्नवभिश्च यतिः॥ तत्रोदाहरणम्—

ज स ज स य ल ग

I S I I I S I S I I I S I S S I S

कृताः समिति शत्रव—स्त्रिभुवने प्रकीर्णं यशः
कृतश्च गुणिनां गृहे निरवधिमहानुत्सवः।
त्वया कृतपरिग्रहे क्षितिपवीर सिंहासनं
नितान्तनिरवग्रहा फलवती च पृथ्वी कृता॥

## वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिग्स्वराः ॥ १८ ॥

यस्य पादे भकाररेफनकारभकारनकारलकारगकारा भवन्ति तद् वृत्तं 'वंशपत्रपतितं' नाम। दशभिः सप्तभिश्च यतिः॥ तत्रोदाहरणम्—

भ र न भ न ल ग

S I I S I S I I I S I I I I I I S

अद्य कुरुष्व कर्म सुकृतं यदि पर—दिवसे
मित्र विधेयमस्ति भवतः किमु चिरयसि तत्।
जीवितमल्पकालकलना—लघुतरतरलं
नश्यति वंशपत्रपतितं हिमसलिलमिव॥

১৬। যাহার প্রতিপাদে নগণ, সগণ, মগণ, রগণ, সগণ, লকার ও গকার থাকিবে, তাহাকে 'হরিণী' বলে। ছয়, চারি ও সাত অক্ষরে যতি হইবে।

১৭। যাহার প্রতিপাদে জগণ, সগণ, জগণ, সগণ, যগণ, লকার ও গকার থাকে, তাহাকে "পৃথ্বী" ছন্দ বলে। আট ও নয় অক্ষরে যতি হইবে।

**मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ॥१९॥**

यस्य पादे मकारभकारनकारास्तकारौ गकारौ च, तद् वृत्तं 'मन्दाक्रान्ता' नाम। चतुर्षु षट्सु सप्तसु च यतिः॥ तत्रोदाहरणम्—

म भ न त त ग ग

S S S S I I I I I S S I S S I S S

प्रत्यादिष्टं समरशिरसः कां दिशं प्राप नष्टं

त्वं निःशेषं कुरु रिपुबलं मागमामाद्य सद्यः।

किं नाश्रौषीः परिणतधियां नीतियोग्योपदेशं

मन्दाक्रान्ता भवति फलिनी वाग्लक्ष्मीः क्षयाय ॥

**शिखरिणी य्मौ न्सौ भ्लौ गृतुरुद्राः ॥ २० ॥**

यस्य पादे यकारमकारनकारसकारभकारलकारगकारा भवन्ति, तद् वृत्तं 'शिखरिणी' नाम। षट्स्वेकादशसु च यतिः॥ तत्रोदाहरणम्—

य म न स भ ल ग

I S S S S S I I I I I S S I I I S

यशःशेषीभूते जगति नरनाथे गुणनिधौ

प्रवृत्तं वैराग्यं विषयरसनिष्क्रान्तमनसाम्।

১৮। যাহার প্রতিপাদে ভগণ, রগণ, নগণ, ভগণ, নগণ, লকার ও গকার থাকে, তাহাকে 'বংশপত্রপতিত' নামক ছন্দ বলে। দশ ও সাত অক্ষরে যতি হইবে

১৯। যাহার প্রতিপাদে মগণ, ভগণ, নগণ, তগণদ্বয় এবং গকারদ্বয় থাকে, তাহাকে "মন্দাক্রান্তা" বলে। এই ছন্দে চার, ছয় ও সাত অক্ষরে যতি থাকে

इदानीमस्माकं घनतरुलतां निर्झरवतीं
नयन्तम् चेतो भवति गिरिमालां शिखरिणीम् ॥

धृत्याम्—

कुसुमितलतावेल्लिता म्तौ न्यौ
यार्विन्द्रियर्तुस्वराः ॥ २१ ॥

यस्य पादे मकारतकारनकारा यकारास्त्रयश्च, तद् वृत्तं 'कुसुमितलतावेल्लिता' नाम । पञ्चसु षट्सु सप्तसु च यतिः ॥ तत्रोदाहरणम्—

म त न य य य

S S S S S I I I I I S S I S S I S S

धन्यानामेताः कुसुमितलता-वेल्लितोत्फुल्लवृक्षाः
सोत्कण्ठं कूजत्-परभृतकला-लापकोलाहलिन्यः ।
मध्वादौ माद्यन्-मधुकरकलो-द्गीतझङ्काररम्या
ग्रामान्तस्रोतः-परिसरभुवः प्रीतिमुत्पादयन्ति ॥

अतिधृतौ—

शार्दूलविक्रीडितं म्सौ ज्सौ तौ-गादित्यऋषयः ॥२२॥

यस्य पादे मकारसकारौ जकारसकारौ तकारौ गकारश्च भवन्ति, तद् वृत्तं 'शार्दूलविक्रीडितं' नाम । द्वादशभिः सप्तभिश्च यतिः ॥

तत्रोदाहरणम्—

২০। যাহার প্রতিপাদে যগণ, মগণ, নগণ, সগণ, ভগণ, লকার ও গকার থাকে, তাহাকে "শিখরিণী" নামক বৃত্ত বলে। এই বৃত্তে ছয় ও একাদশ অক্ষরে যতি হইবে।

২১। যাহার প্রতিপাদে মগণ, তগণ, নগণ ও তিনটি যগণ থাকিবে, তাহাকে "কুসুমিতলতাবেল্লিতা" নামক ছন্দ বলে। এই ছন্দে পাঁচ, ছয় ও সাত অক্ষরে যতি হইবে।

म स ज स त त ग

S S S I I S I S I I I S S S I S S I S

कम्बुग्रीवमुदग्रबाहुशिखरं रक्तान्तदीर्घेक्षणं
शालप्रांशुशरीरमायतभुजं विस्तीर्णवक्षःस्थलम् ।
नीलस्कन्धमनुद्धतं परिजने गम्भीरमन्यम्बरं
राज्यश्रीः समुपैति वीरपुरुषं शार्दूलविक्रीडितम् ॥

इदानीं कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिश्चेति सप्त कृतयः क्रमेणैकाक्षरवृद्ध्योदाह्रियन्ते ।

तत्र कृतौ —

**सुवदना म्रौ भ्नौ यभौ ल्गावृषिस्वरर्त्तवः ॥ २३ ॥**

यस्य पादे मकाररेफभकारनकारयकारभकारलकारगकारा भवन्ति, तद् वृत्तं 'सुवदना' नाम । सप्तसु सप्तसु षट्सु च यतिः ॥ तत्रोदाहरणम्—

म र भ न य भ ल ग

S S S S I S S I I I I I S S S I I I S

या पीनोद्गाढतुङ्ग-स्तनजघनघना—भोगालसगति-
र्यस्याः कर्णावतंसो—त्पलरुचिजयिनी दीर्घे च नयने ।
श्यामा सीमन्तिनीनां तिलकमिव मुखे या च त्रिभुवने
सम्प्राप्ता साम्प्रतं मे नयनपथमसौ दैवात् सुवदना ॥

২২। যাহার প্রতিপাদে মগণ, সগণ, জগণ, সগণ, দুইটি তগণ ও গকার থাকে, তাহাকে "শার্দ্দূলবিক্রীড়িত" নামক ছন্দ বলে। এই ছন্দে বার ও সাত অক্ষরে যতি হইবে।

২৩। যাহার প্রতিপাদে মগণ, রগণ, ভগণ, নগণ, যগণ, ভগণ, লকার ও গকার থাকে, তাহাকে "সুবদনা" নামক ছন্দ বলে। এই ছন্দে সাত সাত অক্ষরে ও ছয় অক্ষরে যতি হইবে।

## वृत्तम् ॥ २४ ॥

यस्य पादे गकारलकाराः क्रमेण भवन्ति, तद् वृत्तं 'वृत्त' नाम । तिप्रकारेण यावद्भिरेव विंशत्यक्षराणि पूर्यन्ते तावतां ग्रहणम् ॥ तत्रोदाहरणम्—

ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ ।

जन्मतो व दुःखकारि कर्म निर्मितं भवत्यनर्थहेतु

तेन सर्व्वमात्मतुल्यमीक्षमाण उत्तमं सुखं लभस्व ।

विहि बुद्धिपूर्व्वकं समोपदेशवाक्यमेतदादरेण,

वृत्तमेतदुत्तमं महाकुलप्रसूतजन्महिताय ॥

अत्र पादान्ते यतिः ॥

म्नौ—

## स्रग्धरा म्रौ भ्नौ यौ य त्रिःसप्तकाः ॥ २५ ॥

यस्य पादे मकाररेफभकारनकारास्त्रयश्च यकारा भवन्ति, तद् वृत्तं स्रग्धरा' नाम । सप्तसु सप्तसु च यतिः । तत्रोदाहरणम्—

म र भ न य य य

ऽऽऽ ऽ।ऽ ऽ ऽ।।। ।।ऽ ऽ।ऽ ऽ।ऽ ऽ

रम्भास्तम्भोपमोरु—र्वलिमलिनघन—स्निग्धधम्मिल्लहस्ता,

मीयमातङ्कलोला—गतिरतिविपुला—भोगतुङ्गस्तनीया ।

रम्भास्तम्भोपमोरु—र्वलिमलिनघन—स्निग्धधम्मिल्लहस्ता,

बिम्बोष्ठी रक्तकण्ठी दिशतु रतिसुखं स्रग्धरा सुन्दरीयम् ॥

भ्नाजनौ—

२४। যাহার প্রতিপাদে যথাক্রমে গকার লকার দ্বারা বিংশতি অক্ষর ।, তাহাকে 'বৃত্ত' বলে।

**भद्रकं भरौ नरौ नरौ नगौ दिगादित्याः ॥ २६ ॥**

यस्य पादे भकाररेफौ, नकाररेफौ, पुनर्नकाररेफौ, नकार-गकारौ च भवतस्तद् वृत्तं 'भद्रकं' नाम। दशभिर्द्वादशभिश्च यतिः। तत्रोदाहरणम्—

भ र न र न र न ग

S I I, S I S, I I I, S I S, I I I, S I S, I I I, S

भद्रकगीतिभिः सकृदपि स्तुवन्ति भव ये भवन्तमभवं
भक्तिभरावनम्रशिरसः प्रणम्य तव पादयोः सुकृतिनः।
ते परमेश्वरस्य पदवी—मवाप्य सुखमाप्नुवन्ति विपुलं
मर्त्यभुवं स्पृशन्ति न पुन—र्मनोहरसुराङ्गनापरिवृताः॥

विज्ञती —

**अश्वललितं नजौ भजौ भजौ भलौ ग्**
**रुद्रादित्याः ॥ २७ ॥**

यस्य पादे नकारजकारौ भकारजकारौ पुनर्भकारजकारौ भकार-लकारौ गकारश्च तद् वृत्तं 'अश्वललितं' नाम। एकादशभिर्द्वादशभिश्च यतिः। तत्रोदाहरणम् —

২৫। যাহার প্রতিপাদে মগণ, রগণ, ভগণ, নগণ ও তিনটি যগণ থাকে, তাহাকে 'স্রগ্ধরা' নামক বৃত্ত বলে। এই ছন্দে সাত সাত অক্ষরে যতি হইবে।

২৬। যাহার প্রতিপাদে ভগণ, রগণ, নগণ, রগণ, নগণ, রগণ, নগণ ও গকার থাকে, তাহাকে "ভদ্রক" নামক বৃত্ত বলে। এই ছন্দে দশ ও দ্বাদশ অক্ষরে যতি হইবে।

২৭। যাহার প্রতিপাদে নগণ, জগণ, ভগণ, জগণ, ভগণ, জগণ, ভগণ লকার ও গকার থাকে, তাহাকে "অশ্বললিত" নামক ছন্দ বলে। এই ছন্দে একাদশ ও দ্বাদশ অক্ষরে যতি হইবে।

न ज भ ज भ ज भ ल ग

।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।।, ।ऽ

पवनविधूतवीचिचपलं विलोकयति जीवितं तनुभृतां
वपुरपि क्षीयमाणमनिशं जरावनितया वशीकृतमिदम्।
सपदि निपीडनव्यतिकरं यमादिव नराधिपान्नरपशुः
परवनितामवेक्ष्य कुरुते तथापि हतबुद्धिरश्वललितम्॥

## मत्ताक्रीड़ा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ ॥२८॥

यस्य पादे मगणौ तकारो नकारचतुष्कं लकारगकारौ च, तद् वृत्तं 'मत्ताक्रीडा' नाम। अष्टभिः पञ्चदशभिश्च यतिः।

तत्रोदाहरणम् –

म म त न न न न ल ग

ऽऽऽ, ऽऽऽ, ऽऽ।, ।।।, ।।।, ।।।, ।।।, ।ऽ

हृद्यं मद्यं पीत्वा नारी स्खलितगतिरतिशयरसिकहृदया
मत्ताक्रीडालोलैरङ्गैर्मुदमखिलविटजनमनसि कुरुते।
गीतक्रीडाश्लीलालापैः श्रवणसुखसुभगसुललितवचना
नृत्यैर्गीतैर्भ्रूविक्षेपैः कलमणितविविधविहगकुलरुतैः॥

संस्कृतौ—

## तन्वी भ्तौ न्सौ भौ न्याविन्द्रियस्वरमासाः ॥२९॥

यस्य पादे भकारतकारनकारसकारा भकारौ नकारयकारौ च, तद् वृत्तं 'तन्वी' नाम। पञ्चसु सप्तसु द्वादशसु च यतिः।

২৮। যাহার প্রতিপাদে মগণদ্বয়, তগণ, চারিটি নগণ, লকার ও গকার থাকে, তাহাকে "মত্তাক্রীড়া" নামক বৃত্ত বলে। এই ছন্দে আট ও পনেরো অক্ষরে যতি হইবে।

तत्रोदाहरणम्—

भ त न म भ भ न य

S I I, S S I, I I I, I I S, S I I, S I I, I I I, I S S

चन्द्रमुखी सु—न्दरघनजघना कुन्दसमानशिखरदशना या
निष्कलवीणा—श्रुतिसुखवचना त्रस्तकुरङ्गतरलनयनान्ता।
निम्नसुखपीनो—न्नतकुचकलसा मत्तगजेन्द्रललितगतिभासा
निर्भरलीला त्रिभुवनविधये मुञ्च नरेन्द्र भवतु तव तन्वी ॥

अभिकृती—

## क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग्
## भूतेन्द्रियवस्वृषयः ॥३०॥

यस्य पादे भकारमकारसकारभकारा नकाराश्चत्वारो गकारश्च भवति, तद्वृत्तं 'क्रौञ्चपदा' नाम। पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भ म स भ न न न न ग

S I I, S S S, I I S, S I I, I I I, I I I, I I I, I I I, S

या कपिलाक्षी पिङ्गलकेशी कलिकरुचिरनुदिन—मनुनयकठिना
दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरति—शयकुटिलगतिः।
आयतजङ्घा निम्नकपोला लघुतरकुचयुग—परिचितहृदया
सा परिहार्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधि सुखमभिलषता ॥

२९। যাহার প্রতিপাদে ভগণ, তগণ নগণ, সগণ, দুইটী ভগণ, নগণ ও যগণ থাকিবে, তাহাকে "তন্বী" নামক বৃত্ত বলে। ইহার প্রতিপাদে পাঁচ সাত ও দ্বাদশ অক্ষরে যতি হইবে।

